तुर्विधत्व क्यच् क्यङ्-क्विप्-प्रत्ययावसेयत्वात् । क्यच्प्रत्ययावसेया हि कर्माधिकरणोपमानकत्वेन द्विविधोक्ता । कृत्प्रत्ययावसेयायाश्च कर्तृक र्मोपमानकत्वेन द्विविधत्वम् ।

तदेवमेषा सप्तदशविधा ग्रन्थकृता उपमा प्रतिपादिता । तदाहु —

कृत्तद्धितसमासेभ्य सुब्धातोरथ वाक्यत ।
पूर्णा लुप्तैकदेशा च गम्यते द्विविधोपमा ॥
एकद्वयत्रयाणा च लोपात्स्याल्लोपिनी त्रिधा ।
पूर्वौ भेदौ द्विधा चात्र तृतीयस्त्वेकरूपक ॥ इति ।

पूर्वौ भेदौ द्विधा चात्रेति । साधारणधर्मवाचिलोपाच्चैकलोपस्य द्वैविध्यम् । द्वितयलोपोपि साधारणधर्मवाचीवादिवियोगात्तथा उपमेयवाचीवादिवियोगाद्विविध । एषा चोपमा विचित्रभेदत्वे सत्यपि यत्रैव चेतोहारित्वमस्ति तत्रैवालकारता प्रतिपद्यते न सर्वत्रेत्युक्तम् ॥

**प्रतिवस्तूपमा ।**

**उपमानसनिधाने च साम्यवाच्युच्यते बुधैर्यत्र ।**
**उपमेयस्य च कविभि सा प्रतिवस्तूपमा गदिता॥२२॥**

यत्रोपमानोपमेययो सनिधाने साम्यवाचिन पदस्यासकृदुपादान क्रियते सा प्रतिवस्तूपमा । ननु यदि साम्यवाचिन पदस्य तत्रासकृदुपादान क्रियते ततोनेकवाक्यत्वमापतति । न चानेकस्मिन्वाक्य इवादीनि प्रयुज्यन्ते एकवाक्यनिष्ठतया तेषामभिधासामर्थ्यस्यावसितत्वात् । अतश्चेवादीनामप्रयोगे कथ तत्रोपमानोपमेयभावावसाय इत्याशङ्क्याह—

**प्राकरणिकेतरत्वस्थित्यैकश्चोपमेयता लभते ।**
**उपमानत्व चापर इत्युपमावाचिशून्यत्वम् ॥ २३ ॥**

नानावाक्यत्वादिवादीनामप्रयागेपि प्राकरणिकत्वाप्राकरणिकत्वपर्यालोचनया अर्थसामर्थ्यादत्रोपमानोपमयभावोवसीयत इत्यर्थ । तदाहु —

इवोदरप्रतीतापि शब्दसस्कारत क्वचित् ।
उपमा लक्ष्यते यत्र केवलार्थनिबन्धना ॥ इति ।

इह प्रकारत्रयेणोपमाया प्रतिपत्ति । क्वचिदिवादिश-दसामर्थ्यादुपमा वाच्यभूता प्रतीयते यथा चन्द्र इव मुखमस्या इत्यादौ । क्वचित्तु तत्तद्विशिष्टसस्कारसहायाच्छब्दात्स्वार्थाभिधानमुखेन लक्ष्यमाणायास्तस्या प्रतिपत्तिर्यथा शस्त्रीश्यामेति ( पा २-१ ५५ सूत्रस्थभाष्यम् )। अत्र हि समासनिबन्धनैकपद्यादिसस्कारसाहिताभ्या शस्त्रीश्यामाश दाभ्या स्वार्थाभिधान-यवधानेन लक्ष्यमाणोपमा गम्यते । क्वचित्तूपमानोपमेयनिबन्धनशब्दसस्काराभावेपि केवलादेवार्थसामर्थ्यात्तस्या प्रतिपत्तिर्यथा रूपकदीपकप्रतिवस्तूपमादिष्वित्यर्थ । अतश्चास्या प्रतिवस्तूपमाया केवलेनैवार्थ्यसामर्थ्येनोपमानोपमेयत्वमवगम्यते इत्यदोष ।

तस्या उदाहरणम् ।

**विरलास्तादृशो लोके शीलसौन्दर्यसपदः ।**
**निशाः कियत्यो वर्षेपि यास्विन्दुः पूर्णमण्डलः ॥ * ३१ ॥**

विरला स्वल्पा । तादृश पार्वतीवर्तिन्यो या शीलसौ-दर्यसपदस्तत्सदृश्य । शील सुस्वभावता । सौन्दर्य लावण्यम् ।

अत्र सवत्सरमध्यवर्तिन्योखण्डशशिबिम्बा रात्रयो द्वादश उपमान शीलसौन्दर्ययो सभारा सकललोकोत्कृष्टा कतिपयजनजुष उपमेय। साधारणश्च धर्मो विरलत्वम् । तच्चोपमानसन्निधाने कियत्य इत्युपात्तम् उपमेयसन्निधाने तु विरला इति । इवाद्यनुपादानेपि च प्राकरणिकत्वाप्राकरणिकत्वपर्यालोचनयात्रोपमानोपमेयभावावसाय । तेनय वस्तुनि वस्तुनि साधारणोपनिबन्धात्प्रतिवस्तूपमा ॥

इति महाश्रीप्रतीहारे-दुराजविरचितायामुद्भटालकारसारसग्रहलघुवृत्तौ प्रथमो वर्ग ।

---

## द्वितीयो वर्गः ।

**आक्षेपोर्थान्तरन्यासो व्यतिरेको विभावना ।**
**समासातिशयोक्ती चेत्यलकारान्परे विदु. ॥ १ ॥ (२४)**

समासातिशयोक्ती चेत्यत्र समासातिशयशब्दयोरुक्तिशब्द प्रत्येकमभिसबध्यते ।

**आक्षेप ।**

**प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया ।**
**आक्षेप इति त सन्त शसन्ति कवय सदा ॥ २ ॥ (२५)**

इह काचिद्वक्रभणितिस्तथाविधा सभवति यस्या विधित्सितोर्थो निषेधव्याजेन सास्क्रियते न तु निषिध्यते । तत्र विधित्सितस्यार्थस्य य प्रतिषेध क्रियते स प्रतिषेध इव भवति न तु प्रतिषेध एव अवान्तरवाक्यार्थत्वेन तत्र वाक्यस्यापर्यवसानात् । अवान्तरवाक्यार्थता च तत्र निषेधस्य विधित्सितार्थविरोधाद्भवति । तत्र हि विधित्सितोर्थ पूर्वोपक्रान्तत्वेन स्थेम्नावतिष्ठमान स्वविरुद्धत्वेन निषेध निषेधतात्पर्यात्प्रच्याव्य स्वगतविशेषाभिधानायावान्तरवाक्यार्थीकरोति । अतोनन्तरोक्तेन प्रकारेणेष्टस्यार्थस्य विशेषमभिधातु यत्र निषेध इव न तु निषेध एव असाविष्टार्थनिराकरणस्य लेशेन सभवदाक्षेपसज्ञकोलकार सत्कविभिरभिधीयते । सन्त कवय इति सबन्ध ।

तस्य भेदद्वितयोपदर्शनायाह ।

**वक्ष्यमाणोक्तविषय. स च द्विविध इष्यते ।**

वक्ष्यमाणमुक्त चेष्टमाश्रित्य निषेधाभिधानादाक्षेपो द्विविध इत्यर्थ ननु **प्रतिषेध इवेष्टस्य**—इत्याक्षेपलक्षणमुक्तम् । इष्टत्व चेच्छाकर्मता । यस्य च वस्तुन इच्छाकर्मता तस्य नावश्यमुक्तिक्रिया प्रतिकर्मत्व भवति । इष्यमाण हि कदाचिदुच्यते कदाचिन्न । अतश्चेष्टस्यो-

क्तिकर्मतामाश्रित्य यदेतदाक्षेपस्य वक्ष्यमाणोक्तविषयतया द्वैविध्यमुक्त तन्न सगच्छत इत्याशङ्क्याह ।

**निषेधेनेव तद्बन्धो विधेयस्य च कीर्तित ॥ ३ ॥ (२६)**

विधेयस्य विधातु ज्ञापयितुमभिमतस्य यो निषेध इव तेनाय वक्ष्यमाणोक्तविषय आक्षेपो निबध्यते । एतदुक्त भवति । विधानकर्मताद्वारेणैवात्र इष्टत्वमवसीयते निबन्धनान्तराभावात् । विधानकर्मता च विधानात्मिकाया उक्ते कर्मता । साच द्विविधा आर्थी शाब्दीच । यत्र स्वशब्दव्यापारमन्तरेणापि शब्दान्तरव्यापारसहायनिषेधमुखेनैव विधित्सितोर्थोवगम्यते तत्रार्थी । तत्र च वक्ष्यमाणविषय आक्षेप । यत्र तु विधिमुखेनैव वक्तुमिष्टस्यार्थस्योपादान क्रियते तत्र शाब्दी । तत्र चोक्त विषयता आक्षेपस्य । एव चानन्तरोदितया नीत्या शाब्देनार्थेन च विधिना यदवसितमिष्ट तस्योक्तिक्रियाकर्मत्वसभवादुक्तिक्रियाया कर्मभूतो योर्थस्तदाश्रय वक्ष्यमाणविषयत्वमुक्तविषयत्व चाक्षेपस्य न विरुध्यते ।

तत्र वक्ष्यमाणविषयस्याक्षेपस्योदाहरणम् ।

**अहो स्मरस्य माहात्म्य यद्रुद्रेपि दशेदृशी ।**
**इयदास्तां समुद्राम्भः कुम्भैर्मानं तु के वयम् ॥ *१ ॥**

अहो इति विस्मये । अत्र मन्मथमाहात्म्य तदवस्थाविशेषसस्पर्शेन प्रतिपादयितुमिष्टम् । तच्च तस्य तथाप्रतिपादनमियदास्तामित्यादिना निषिद्धम् । निषेधश्चात्राभिधेयत्वविरोधात् । अभिधेयत्वेन च विरोध आनन्त्येन तस्य तथाविधस्य वक्तुमशक्यत्वात् । रुद्रेपि नाम ईदृशी दशेति हि सामान्यरूपत्वेन मन्मथमाहात्म्य प्रतिपादित न तु विशेषरूपतया । अतो वक्तुमिष्टाना स्मरमाहात्म्यावस्थाविशेषाणामयमानन्त्येनाभिधाननिषेध इव न तु निषेध एव विवक्षितार्थविरोधेनावान्तरवाक्यार्थत्वात् । तथाह्यत्र समुद्राम्भस कुम्भैर्मातुमशक्यत्व यदसमदर्थक-

नोत्कर्षयितमिष्टाना मन्मथ-

माहात्म्यावस्थाविशेषाणा पूव प्रतिपिपादयिषितत्वेन लब्धप्रतिष्ठाना वाक्यार्थत्वम् । अतश्च तदभिधाननिषेधस्य तद्विरोधादत्रावान्तरवाक्यार्थता । न चावान्तरवाक्यार्थो वाक्यविश्रा तिस्थानतया वक्तु शक्य । न खलु रक्त पटो भवतीत्यत्र रक्तत्वावच्छिन्नपटभवनपरत्वाद्वाक्यस्य पटभवनपर्यवसानमात्रत्व सुभणम् । अतोत्रापि निषेधस्यावान्तरवाक्यार्थत्वेन वाक्यविश्रान्तिस्थानत्वाभावान्निषेधरूपत्वमिव न तु निषेधरूपता । स च निषेधोत्रावान्तरवाक्याथत्वात्प्रधानवाक्यार्थानुगुण्येन प्रवर्तमान स्वकण्ठेनाभिधान मन्मथमाहात्म्यावस्थाविशेषाणा निषेधति न पुनरथ सामर्थ्यावसेयमपि । अतश्च समुद्राम्भस कुम्भैर्मातुमशक्यत्वमस्मदर्थकर्तृक स्वकण्ठेनाभिहित यत्तत्साहश्येनावसिते सविज्ञानपदशून्ये स्मरमाहात्म्यावस्थाविशेषाणामान त्यलक्षणे विशेषे वाक्यस्य पर्यवसानम् । तेनायमिष्टमथ प्रतिषेध याजेन विशेषेवस्थापयति तस्मादाक्षेप । अत्र च —अहो स्मरस्य माहात्म्य यद्रुद्रेपि दशे हशी—इत्येतच्छ द यापारसहायेन इयदास्ताम्—इतिनिषेधेनैव स्वकण्ठेनानुपात्तानामपि मन्मथमाहात्म्यावस्थाविशेषाणा वक्ष्यमाणतया सूचनम् । तेषा च तथासूचिताना निषेध याजेन संविज्ञानपदशू यान त्यभेदप्रतिपादनम् । अतो वक्ष्यमाणविषयता आक्षेपस्य ।

उक्तविषयस्य तु तस्योदाहरणम् ।

**इति चिन्तयतस्तस्य चित्र चिन्तावधिर्न यत् ।**
**क वा कामविकल्पानामन्तः कालस्य चेक्षितः ॥ *२॥**

अत्र चित्रत्वस्योक्तस्योक्ति क वेति प्रसिद्धत्वादाक्षिप्यते । पूर्वत्र खलु विरुद्धत्वमाक्षेपनिबन्धनमुक्तम् इह तु प्रसिद्धत्वम् । द्वाभ्यामेव च प्रकाराभ्यामाक्षेपो भवति विरुद्धत्वेन प्रसिद्धत्वेन च । उक्त च—

वस्तु प्रसिद्धमिति यद्विरुद्धमिति वास्य वचनमाक्षिप्य ।
अ यत्तथात्वसिद्ध्यै यत्र ब्रूयात्स आक्षेप ॥ इति । ( रुद्रट का ८ ९९)

प्रसिद्धत्व चात्र समर्थयितु कालसाहश्यमुक्तम् । यथा कालस्यान्ते

नेक्ष्यते तद्वत्कामविकल्पानाम् । अतो नैवात्र चित्रत्वमन्यत्राप्यस्य रूपस्य परिदृष्टत्वादिति । कालतुल्यतया चात्र कामविकल्पानामानन्त्यात्मको विशेष सविज्ञानपदशून्योभिधित्सित । तस्य च चित्रतया सामान्येन पूर्वमुपक्रान्तस्याधुना निषेधवशेन संविज्ञानपदशून्येन विवक्षितेन रूपेण वाक्यार्थीभतत्वान्निषेधस्य पूर्ववदवान्तरवाक्यार्थता । तेन कं वेत्यय निषेध इव न तु निषेध एव । तेनात्रोक्तविषयता आक्षेपस्य । तदाहु –

शब्दस्पृष्टेथवाप्यार्थे वक्तुमिष्टे निषिद्धता ।
तदङ्ग तद्विरोधेन यत्राक्षेपो भवेदसौ ॥ इति ।

शब्देन स्पृश्यते वक्तुमिष्ट उक्तविषये आक्षेपे । वक्ष्यमाणविषये तु विवक्षितस्यार्थता शब्दान्तरव्यापारसहायनिषेधमुखेन तस्योपस्थाप्यमानत्वात् । यश्चात्रोभयत्रापि निषेध क्रियते स विवक्षितार्थविरोधात्स्वतात्पर्यं त्यक्त्वा विवक्षितमेवार्थं संस्कुर्वंस्तदङ्गता प्रतिपद्यते । अतोत्र द्विविध आक्षेपो भवतीत्यर्थ ।

अर्थान्तरन्यासः ।

**समर्थकस्य पूर्वं यद्वचोन्यस्य च पृष्ठत ।**
**विपर्ययेण वा यत्स्याद्धिशब्दोक्त्यान्यथापि वा ॥४॥(२७)**
**ज्ञेय सोर्थान्तरन्यास ।**

यत्र समर्थ्यसमर्थकभाव सोर्थान्तरन्यास । तत्र हि समर्थकस्य समर्थकतावगतिहेतु व्याप्ति पक्षधर्मत्व चानुपन्यस्यार्थान्तरस्यैवोपन्यास क्रियते व्याप्तिपक्षधर्मत्वयो स्वशब्देनानुपात्तयोरपि गर्भीकृतत्वात् । अतोसावर्थान्तरन्यास । स च चतुर्विध । तत्र समर्थके पूर्वमभिहिते समर्थ्यस्य यत्र पश्चादभिधान तत्र द्वौ प्रकारौ भवत । हिशब्दाभिव्यक्तत्व समर्थ्यसमर्थकभावस्यैक प्रकार । तदुक्त–**समर्थकस्य पूर्वं यद्वचोन्यस्य च पृष्ठत** –इति । **हिशब्दोक्त्या**– इति च ।

तस्योदाहरणम् ।

तन्नास्ति यन्न कुरुते लोको ह्यत्यन्तकार्यिक' ।
गच्छन्तोपि भगीरथमवराघस्य स्म वर्तते ॥ ॐ ३ ॥

बटूभूय अचिरकृतोपनयनत्वमापद्य । अत्र शर्वस्य सर्वलोकातिशायिनो बटूभावेन वृत्तिमनुपपद्यमानतयाशङ्क्य तत्समर्थनाय समर्थक पूर्वमेवोपन्यस्तम्—तन्नास्ति यन्न कुरुते —इति । अत्यन्तकार्यिकत्वाद्नुचितमपि रूपमनुभूतवान् शर्वस्तदन्यैवविधपुरुषवदिति । अत्र च हिश ब्देनाभिव्यक्त समर्थ्यसमर्थकभाव ।

यत्र पूर्वेणैव क्रमेण समर्थ्यसमर्थकयोरुपन्यासो हिशब्दश्चार्थसामर्थ्यावसेयार्थत्वान्न प्रयुज्यते तत्र द्वितीयोऽर्थान्तरन्यासभेदो भवति । तदुक्तम् **—अन्यथापि वा—**इति । हिश ब्दोक्तिमन्तरेणापीत्यर्थ ।

तस्योदाहरणम् ।

**प्रच्छन्ना शस्यते वृत्तिः स्त्रीणां भावपरीक्षणे ।**
**प्रतस्थे धूर्जटिरतस्तनु स्वीकृत्य बाटवीम् ॥ * ४ ॥**

भाव आशय । बाटवी ब्रह्मचारिसबधिनीम् । अत्र धूर्जटेर्बटुवेषालम्बनेन प्रच्छन्ना वृत्तिरनुपपन्नेत्याशङ्क्य तत्समथनाय पूर्वमेव समर्थकमभिहित—प्रच्छन्ना शस्यते वृत्ति —इत्यादिना । योषिदाशयपरीक्षणप्रवृत्तत्वाद्धूर्जटि प्रच्छन्ना वृत्तिमाश्रितवानिति । हिश द्श्चात्रात श ब्दसामर्थ्येन यस्मादित्यस्यार्थस्यावगतत्वान्नोपात्त ।

एवमेतौ समर्थकपूर्वोपन्यासावर्थान्तरन्यासौ द्वावेवोक्तौ ।

यत्रापि चैतद्विपर्ययेण समर्थ्यस्य पूर्वमुपन्यास पश्चात्समर्थकस्य तत्रापि समर्थ्यसमर्थकभावे हिश ब्दावगतेऽर्थाक्षिप्ते च सति द्वैविध्यम् । तदुक्त **—विपर्ययेण वा यत्स्याद्धिशब्दोक्त्यान्यथापि वा —**इति ।

पूर्वस्योदाहरणम् ।

**हरोऽथ ध्यानमातस्थौ संस्थाप्यात्मानमात्मना ।**
**विसंवदेद्धि प्रत्यक्ष निर्ध्यात ध्यानतो न तु ॥ * ५ ॥**

अत्र हरस्य व्यवहितार्थविषयत्वेनाप्रतिहतबाह्येन्द्रियवृत्तित्वात्सति बाह्येन्द्रियजन्यप्रत्यक्षसंभवे ध्यानाश्रयणमयुक्तत्वेन सभाव्य तत्समथ-

नोयोक्त– विसवदेद्धिप्रत्यक्षामित्यादि । अत्य ताविसवादकोपल ध्युपायार्थित्वाद्ध्यानमास्थितवान् हर इति ।

हिश दानभिव्यक्ते तु समर्थ्यसमर्थकभावे यत्र समर्थ्यस्य पूवमुपन्यासस्तत्रोदाहरणम् ।

अपश्यच्चातिकष्टानि तप्यमानां तपांस्युमाम् ।
असभाव्यपतीच्छानां कन्यानां का परा गति ॥ * ६ ॥

बहूनामाभिमतवरप्राप्त्युपायाना प्रार्थनादीना सभवे कस्माद्भगवती तपसा शरीरमायासितवतीत्याशङ्क्य तत्समर्थनायाभिहितम्– असभाव्यपतीच्छानामिति । दु प्रापभर्त्रभिलाषित्वात्तप समाश्रितवती । तपासि भगवती खेदयन्ति तानि पुन सा तथाविधान्युपार्जयति अतस्तपस्तप्यते । तपस्तप कर्मकस्यैव (पा ३-१-८७ ८८)–इति कर्तु कर्मवद्भाव ।

एवमेष चतुर्विधोर्थान्तरन्यासोभिहित ।

ननु यदि समर्थ्यसमर्थकभावे सत्यर्थान्तरन्यासो भवति एव सत्यप्रस्तुतप्रशसादृष्टान्तयोरपि समर्थ्यसमर्थकभावसद्भावादर्थान्तरन्यासताप्रसङ्ग । तथा हि–

प्रीणितप्रणयि स्वादु काले परिणत बहु ।
विना पुरुषकारेण फल पश्यत शाखिनाम् ॥

इत्यस्यामप्रस्तुतप्रशसाया विशेषात्सामान्यस्य प्रतिपत्तिर्यथा सेचनादिक पुरुषव्यापारमन्तरेण वनशाखिना विविधगुणोपेतस्य फलस्य प्रसूतिर्दैवप्रधाना एवमेतत्सर्वं जगति दैवप्रधानमिति । अत्र च समर्थ्यसमर्थकभावो विद्यते । सर्वं जगच्चेष्टित दैवप्रधान पुरुषकारान्वयव्यतिरेकाननुविधायित्वाद्वनशाखिफलवदिति । ततश्च तत्राप्यर्थान्तरन्यासत्वप्रसङ्गादलक्ष्यव्याप्तिर्लक्षणदोष । दृष्टान्तेपि च समर्थ्यसमर्थकभावो विद्यते । तथा हि–

त्वयि दृष्ट एव तस्या निर्वाति मनो मनोभवज्वलितम् ।
आलोके हि सिताशोर्विकसति कुमुद कुमुद्वत्या ॥

तद्वृत्त्वद्गुणपक्षपातित्वात्तस्यास्त्वद्दर्शने मनो मन्मथाग्निप्रज्वालितमुशाम्यतीति समर्थ्यसमर्थकभावोवगम्यते । तेन दृष्टान्तेप्यर्थान्तरन्यासताप्रसङ्ग इत्याशङ्क्याह—

**प्रकृतार्थसमर्थनात् ।**
**अप्रस्तुतप्रशसाया दृष्टान्ताच्च पृथक् स्थित ॥५॥ (२८)**

सत्यमप्रस्तुतप्रशसाया दृष्टान्ते च समर्थ्यसमर्थकभावोवगम्यते । न तु तत्रार्थान्तरन्यासवत्समर्थ्यसमर्थकभावस्य सभव । अर्थान्तरन्यासे हि समर्थ्यस्य यथायोग पूर्वोत्तरकालभावित्वेन स्वकण्ठेनोपात्तस्य समर्थनम् । अप्रस्तुतप्रशसाया त्वप्रकृतसामर्थ्येन प्रकृतमाक्षिप्यते न तु स्वकण्ठेनोपादीयते । यथा पूर्वोपवर्णिते उदाहरणे । तत्र हि वनशाखिना फलदर्शनेनाप्रकृतेन दैवप्रधानेन समग्रजगद्गोचर दैवप्राधान्य प्रकृतमाक्षिप्यते । न तु तस्यार्थान्तरन्यासवत्स्वकण्ठेनोपादानम् । अतश्च तत्र सत्यपि समर्थ्यसमर्थकभावे शब्दोपक्रान्तप्रकृतार्थनिष्ठत्वाभावान्नार्थान्तरन्यासत्वम् । दृष्टान्तेपि च द्वयोरपि समर्थ्यसमर्थकयो स्वकण्ठेनोपात्तत्वात्सत्यापि स्वकण्ठोपात्तप्रकृतार्थनिष्ठत्वे दृष्टान्तस्य समर्थ्यसमर्थकभावपुरस्सरीकारेणाप्रवर्तमानत्वान्न भवत्यर्थान्तरन्यासत्वम् । न खलु तस्य समर्थ्यसमर्थकभावपुरस्सरीकारेण प्रवृत्ति बिम्बप्रतिबिम्बभावमात्रस्य शब्दस्पृष्टत्वात् । अर्थाद्धि तत्र समर्थ्यसमर्थकभावावसाय । अर्थान्तरन्यासे तु समर्थ्यसमर्थकभावेनैवोपक्रम । तेन यत्र समर्थ्यसमर्थकभावोपक्रममर्थान्तरोपादान तत्रार्थान्तरन्यासत्वाद्दृष्टान्तस्यार्थान्तरन्यासताप्रसङ्गो न भवति । तदिदमुक्त—**प्रकृतार्थसमर्थनात्**—इति । अत्र प्रकृतशब्द स्वकण्ठोपात्तप्रकृतार्थनिष्ठो द्रष्टव्य । समर्थन चात्रोपक्रमावस्थावर्त्युपात्तम् ॥

**व्यतिरेकः ।**

**विशेषापादन यत्स्यादुपमानोपमेययो ।**
**निमित्तादृष्टिदृष्टिभ्या व्यतिरेको द्विधा तु स ॥६॥ (२९)**

उपमानोपमेययो परस्पर यत्र विशेष ख्याप्यते स व्यतिरेक । तत्र ह्युपमानादुपमेयस्योपमेयादुपमानस्य वा केनचिद्विशेषेणातिरेक आ-

धिक्य तस्माद्व्यतिरेक । स च द्विविध । तत्र विशेषख्यापननिमित्तस्यार्थसामर्थ्यादाक्षेपादेक प्रकार । अपरस्तु तस्य स्वशब्देन प्रतिपादनात् । तदुक्त—**निमित्तादृष्टिदृष्टिभ्यां द्विधा** -इति। एतावपि च भेदौ प्रत्येक द्विविधौ । क्वचिद्धि अर्थसामर्थ्यात्प्रतीयमाने उपमानोपमेयभावे पूर्वोक्तेन प्रकारद्वयेन यतिरेक ख्याप्यते क्वचित्तु इवादिभिरुपात्ते ।

तत्रार्थसामर्थ्येन यत्रोपमानोपमेयभावोवगम्यते तत्र पूर्वस्मिन्प्रकारद्वये पूर्वभेदस्योदाहरणम् ।

**सा गौरी शिखर गत्वा ददर्शोमां तपःकृशाम् ।**
**राहुपीतप्रभस्येन्दोर्जयन्ती दूरतस्तनुम् ॥ * ७ ॥**

राहुणा पीता द्रवद्र यस्योदकादे स्वगलबिलान्तर्भावन यत्तद्वदात्माभ्य तरीकृता प्रभा यस्य स तथोक्त । अत्र राहुपीतप्रभत्वविशिष्टस्ये दोस्तनुरुपमानम् । तप कृशा पार्वत्युपमेया । अनयो साधारणो धर्म स्वभावत सौ दये सति निमित्तवशाद्विच्छायत्वम्। तच्च स्वकण्ठेनानुपात्तमपि पदार्थस्वरूपपर्यालोचनया लभ्यते। एवमिवाद्यभावेप्युपमानोपमेयभावस्यात्र सामर्थ्यात्प्रतिपत्ति । जय तीमिति च उपमानादुपमेयस्य विशेष ख्यापित । तस्य च विशेषस्य ख्याप्यमानस्य निमित्तमत्र न स्वकण्ठेनोपात्तम् । अर्थसामर्थ्यात्तु तदवगम्यते। राहुरि दुप्रभापाने तथा न समर्थ यथा तप सातिशयत्वात्पार्वत्या क्षामत्वे इति राहुतोपि तप-सातिशयत्वमुपमानादुपमेयस्य विशेषनिमित्तमत्रावगम्यते । एवमयमनुपात्तनिमित्तो व्यतिरेक ।

उपात्तनिमित्तस्तु ।

**पद्मं च निशि निःश्रीकं दिवा चन्द्र च निष्प्रभम् ।**
**स्फुरच्छायेन सतत मुखेनाधःप्रकुर्वतीम् ॥ * ८ ॥**

मुखमुपमेयम् । पद्ममिन्दुश्चोपमानम् । तच्चात्र द्वय स्वकण्ठस्पृष्टम् तयोस्तु साधारणो धर्म. कान्तिमत्त्वादिरुपमानोपमेयभावश्चेत्येतदुभय सा- ... । न खल्वत्र वक्ष्यमाणव्यतिरेकवदुपमानोपमेयभावस्य

द्योतका इवादय उपात्ता । अथ प्रकुर्वतीमिति चोपमानादुपमेयस्य विशेष ख्यापित । तत्र च निमित्तमुपात्तमुपमानोपमेयोभयाधारत्वेन। उपमानयोस्तावत्पद्मच न्द्रयोर्निशि दिवा च यथाक्रम नि श्रीकत्वनिष्प्रभत्वे । उपमेये तु रात्रिन्दिव स्फुरच्छायता। अतो विशेषे निमित्तदर्शनेनाय व्यतिरेक । तदेव यत्रेवादिनोपमानोपमेयभावो नावद्योतितस्तत्र द्विविधो व्यतिरेको दर्शित ।

इवाद्युपात्ते तूपमानोपमेयभावे यो व्यतिरेकस्तमाह—

**यो वैधर्म्येण दृष्टान्तो यथेवादिसमन्वित ।**
**व्यतिरेकोत्र सोपीष्टो विशेषापादनान्वयात् ॥ ७॥ (३०)**

यो वैधर्म्येण दृष्टान्त इति विशेषापादनान्वयादिति च व्यतिरेकलक्षण योजितम् । वैधर्म्य ह्युपमेयधर्मस्योपमाने विगम । यथेवादिसमन्वित इत्यनेन यथेवाद्यवद्योतितत्वमुपमानोपमेयभावस्याह ।

तस्योदाहरणम् ।

**शीर्णपर्णाम्बुवाताशकष्टेपि तपसि स्थिताम् ।**
**समुद्वहन्तीं नापूर्व गर्वमन्यतपस्विवत् ॥ * ९ ॥**

शीर्णपर्णाम्बुवातानामाशो भक्षणम् । अत्रान्यतपस्विन उपमानम् । भगवत्युपमेया । साधारणश्च धर्म कष्टे तपस्यवस्थित्वाच्चेतस सोल्लासता। वतिश्चात्र गर्वोद्वहननिबधन यत्तच्चेतस सोल्लासत्व तन्निबन्धनमुपमानोपमेयभावमवगमयति । गर्व न समुद्वहन्तीमित्युपमानादुपमेयस्य विशेष प्रतिपादित । अन्ये किल तपस्विन सातिशयतपोवशात्समुल्लसितचित्ता सन्तो गर्व समुद्वहन्ति । भगवती त्वत्यन्तमुपशान्तचित्तत्वान्न तथा। एव चात्र गर्वापक्रमावस्थापेक्षमुपमानोपमेययो सादृश्य तदनिर्वाहात्तूपमानादुपमेयस्य व्यतिरेक । अनिर्वाहे च निमित्तमत्र स्वकण्ठेनानुपात्तमप्यर्थसामर्थ्यादवगम्यते अत्यन्तोपशान्तचित्तत्व नाम ।

एवमय निमित्तादर्शने वत्यपात्तोपमानोपमेयभावो व्यतिरेक उदाहृत । निमित्तोपादाने तु तस्योदाहरणमुन्नेयम् ।

एवमेते चत्वारो यतिरेका प्रतिपादिता । निमित्तदर्शनादर्शनाभ्या यौ यतिरेकौ तयो प्रत्येकमुपमानोपमेयभावस्य इवाद्युपादानानुपादानाभ्या द्विभेदत्वात् ।

एषामपि चतुर्णा यतिरेकाणा श्लिष्टोक्तियोग्यश दोपादाने सति पुनरपरे पूर्वोपक्रान्तेनैवरूपेण चत्वारो भेदा भवन्ति । तदाह–

**श्लिष्टोक्तियोग्यशब्दस्य पृथक्पृथगुदाहृतौ ।**
**विशेषापादन यत्स्याद्यतिरेक स च स्मृत ॥ ८ ॥ (३१)**

एकप्रयत्नोच्चार्याणामित्यादिवक्ष्यमाणलक्षण श्लिष्टम् । श्लिष्टालकारसमुचित यदुच्चारण तत्समुचितस्य श दस्य यदा त त्रेण सदृशशब्दान्तरोपादानहेतुतया वा प्रयोगो न क्रियते अपि तु पृथक्पृथगुच्चारण तदा विशेषापादने सति व्यतिरेको भवति ।

तस्योदाहरणम् ।

**या शैशिरी श्रीस्तपसा मासेनैकेन विश्रुता ।**
**तपसा तां सुदीर्घेण दूराद्विदधतीमधः ॥ * १० ॥**

अत्र शिशिरशोभा उपमानम् । भगवती उपमेया । तयोश्च साधारणो धर्मस्तपोयुक्तत्व नाम । एकत्र तपा माघो मास अपरत्र त्वभ्युदयहेतु कृच्छ्राचरणम् । इवादयश्चात्रानुपात्ता अपि सामर्थ्यादवगम्य ते । व्यतिरेकस्तु–दूराद्विदधतीमध इति । तस्य च निमित्त मासैक्य दीर्घत्व च तपसो । तच्च यथाक्रममुपमानोपमेयगतत्वेनोपात्तम् । तत्र च वत्यादिना अनुपात्ते उपमानोपमेयभावे निमित्तदर्शनेन यतिरेक उदाहृत ।

एवमनया दिशान्यदपि श्लिष्टोक्तियोग्यश दनिबन्धे सति यतिरेकस्य पूर्वोक्तनयेन भेदत्रयमुदाहार्यम् ॥

विभावना ।

**क्रियाया प्रतिषेधे या तत्फलस्य विभावना ।**
**ज्ञेया विभावनैवासौ समाधौ सुलभे सति ॥ ९ ॥ (३२)**

इह यत्किंचिन्नायते तत्सर्व क्रियाफलं क्रियासत्त्वेन कारणस्य कार्योत्पत्तौ प्रातीतिकेन रूपेण परिदृश्यमानत्वात् । सर्वेषां फलभूतानां क्रियैव हि कारणम् । यत्र च क्रिया प्रतिषिध्यते अथ च क्रियाफलस्योत्पत्तिरुपनिबध्यते तत्र विभावनालंकार । कारणविगमे किल कार्यस्य तत्रोत्पत्तिरुपवर्ण्यते अतो विरुद्धाभासा भावना उत्पादना तेन विभावना । न चैवं सापि व्यर्थदोषत्वप्रसङ्ग —विरुद्धार्थं मतं व्यर्थम्—इति । अत आह—**समाधौ सुलभे सति**—इति । समाधि परिहार । यत्र विभावनायां सुलभ परिहार इत्यर्थ ।

तस्या उदाहरणम् ।

**अङ्गलेखामकाश्मीरसमालम्भनपिञ्जराम् ।**
**अनलक्तकृताताम्राभामोष्ठमुद्रां च बिभ्रतीम् ॥ *११ ॥**

अङ्गलेखा शरीरयष्टि । काश्मीरं कुङ्कुमम् । येयं पीतच्छायता शरीरस्य सा नायिकानां कुङ्कुमसमालम्भनलक्षणक्रियाकार्या प्रायेण परिदृश्यते । भगवत्यास्तु शरीरे पीतच्छायत्वं न कुङ्कुमसमालम्भनेनोत्पादितम् । अत कुङ्कुमसमालम्भनलक्षणाया क्रियाया विगमे फलस्य पीतच्छायत्वस्यात्रापदेश । परिहारश्चात्र स्वाभाविकतया तच्छायत्वमिति । तेनेयं विभावना । अनलक्तकृताताम्राभामित्यत्रालक्तककारणिकाया रागक्रियाया निषेधे तत्फलस्य लौहित्यस्योत्पत्ति स्वाभाविकी निर्दिष्टा अतो विभावना । अत्र च कुङ्कुमादिसपर्यायेण पिञ्जरत्वादिना उपमानभूतेन स्वाभाविकस्य पिञ्जरत्वादेरुपमेयभूतस्याभेदाध्यवसायोतिशयोक्तिरपि द्रष्टव्या ॥

**समासोक्ति ।**

**प्रकृतार्थेन वाक्येन तत्समानैर्विशेषणै ।**
**अप्रस्तुतार्थकथनं समासोक्तिरुदाहृता ॥१०॥ (३३)**

यत्र प्रस्तुतार्थनिष्ठं वाक्यं तत्समानैर्विशेषणैस्तत्राप्रकृतेनार्थेन तुल्यानि यानि विशेषणानि तद्वारेण सादृश्यवशादप्रस्तुतमर्थमुपमानभूतं कथयति सा संक्षेपेणोपमानोपमेयलक्षणार्थद्वितयाभिधानात्समासोक्ति ।

तस्या उदाहरणम् ।

**दन्तप्रभासुमनसं पाणिपल्लवशोभिनीम् ।**
**तन्वी वनगतां लीनजटाषट्चरणावलिम् ॥ *१२ ॥**

अत्र दन्तप्रभापाणिजटा भगवतीविशेषणभूता यथाक्रमं लतागतसुमनःपल्लवषट्चरणरूपेण लतया तद्भावमापद्यन्ते । तनुत्वं तु भगवतीलतयोः साधारणो धर्मः । वनशब्देन च रूपकप्रतिभोत्पत्तिहेतुना श्लेषेण भगवतीतपश्चर्याधारभूतमुदकं लताधारेण काननेन रूप्यते । अत एतान्यत्र प्रकृताया भगवत्या अप्रकृतया लतया समानानि विशेषणानि । तत्सामर्थ्येन च प्रकृतया भगवत्या उपमेयभूतया लता उपमानत्वेनाक्षिप्यते । तेनेयं समासोक्तिः ॥

**अतिशयोक्तिः ।**

**निमित्ततो यत्तु वचो लोकातिक्रान्तगोचरम् ।**
**मन्यन्तेतिशयोक्तिं तामलंकारतया बुधाः ॥११॥ (३४)**
**भेदेनन्यत्वमन्यत्र नानात्वं यत्र बध्यते ।**
**तथा संभाव्यमानार्थनिबन्धेतिशयोक्तिगीः ॥१२॥ (३५)**
**कार्यकारणयोर्यत्र पौर्वापर्यविपर्ययात् ।**
**आशुभावं समालम्ब्य बध्यते सोपि पूर्ववत् ॥१३॥ (३६)**

यद्वचनं किंचित्कारणमाश्रित्य लोकातिक्रान्तगोचरमुपनिबध्यते सातिशयोक्तिः । तस्याश्च चत्वारो भेदाः । यत्र भेदे अन्यत्वे अनन्यत्वमैक्यं स एकः । अन्यत्राभेदे ऐक्ये नानात्वं भेदो यत्र स द्वितीयः । तथा बहिरविद्यमानस्यार्थस्य संभावनामात्रेणोपनिबन्धे तृतीयः । कार्यकारणयोस्तु कार्यस्य शीघ्रमेवोत्पादात्पौर्वापर्यविपर्ययेण चतुर्थो भेदः ।

तत्राद्यस्य भेदस्योदाहरणम् ।

**तपस्तेजःस्फुरितया निजलावण्यसंपदा ।**
**कृशामप्यकृशामेव दृश्यमानामसंशयम् ॥ *१३ ॥**

अत्र यासावकार्श्यावस्था भगवत्याः पूर्वमभूत्ततो भिन्नमपि तपोजनितं कार्श्यं तदभेदेनोपनिबद्धमकृशाभेनेति । तत्र च निमित्तं तपस्तेजसा सविशेषत्वमापादितः सौन्दर्यसंभारः । अतो निमित्तवशेन लोकातिक्रान्तो गोचरोऽस्य वाक्यस्य । तेनेयमतिशयोक्तिः ।

द्वितीयस्य तु भेदस्योदाहरणम् ।

अचिन्तयच्च भगवानहो नु रमणीयता ।
तपसास्याः कृतान्यत्र कौमाराद्येन लक्ष्यते ॥ *१४ ॥

अत्र भगवती कुमारीभावेऽपि वर्तमाना तदुत्तरकालभाविनी यासौ यौवनावस्था तद्युक्तत्वेनोपनिबद्धा कौमारादन्यत्वमिति । निमित्तं चात्र तपोजनिता रमणीयता । तेनायमभेदे भेदोपनिबन्धः ।

तृतीयस्य पुनर्भेदस्योदाहरणम् ।

पतेद्यदि शशिद्योतच्छटा पद्मे विकाशिनि ।
मुक्ताफलाक्षमालायाः करेऽस्याः स्यात्तदोपमा ॥ *१५ ॥

शशिद्योतच्छटा च द्विप्रकारा प्रकारः । अस्याः करे मुक्ताफलाक्षमालायास्तदा उपमा स्यादिति संबन्धः । अत्र रजनिकरकरसंपर्के सति कमलस्य संकोचावलोकनाद्विकाशित्वं बहिरसंभवदपि कविप्रजापतिना प्रतिभोपजनितेन स्वव्यापारेण संभवद्रूपतया प्रदर्शितम् । अतोऽत्र संभाव्यमानार्थनिबन्धः । तस्य च लोकातिक्रान्तगोचरस्यार्थस्य संभावनायां निमित्तं भगवतीकराधारतया मुक्ताफलाक्षमालावलोकनम् । तथाह्ययं तावल्लोकातिक्रान्तापरिदृष्टपूर्वोऽस्माभिर्गौरीकरमुक्ताफलाक्षमालयोराधाराधेयभावोऽवलोकितः । तत्सजातीयस्य पद्मस्य विकाशिनश्चन्द्रकराणां च यद्याधाराधेयभावः स्यात्तदात्रोपमानोपमेयभावो भवेदिति संभावना प्रवृत्ता । अतोऽत्र सजातीयपदार्थदर्शनाद्बहिरसंभवदपि वस्तु संभवद्रूपतयोपवर्ण्यते । एकस्मिन् खलु पदार्थे परिदृष्टेऽन्यस्मिन्ननवलोकितेऽपि तत्सजातीयसंभावना प्रवर्तते । तथा दाक्षिणात्यस्यैकस्मिन्नुष्ट्रे परिदृष्टे सत्यपरिदृष्टोष्ट्रान्तरसंभावना । अतोऽत्र संभावना सनिमित्ता । अनेन च प्रकारेणात्रोपमानाभावः प्रकृतस्य वस्तुनः प्रदर्श्यते नास्त्यन्यत्किंचिदस्योप

मानमिति । अत एव सभा यमानतयाथस्योपनिबद्धस्य निराचिकीर्षया यदिश द प्रयुक्त । यदिशब्देन ह्यत्राशङ्का द्योत्यते । आशङ्का चानिश्चितसद्भावे वस्तुनि भवति । यच्चानिश्चितसद्भाव कविवेधसा सभवद्रूपतयोपदर्शित वस्तु तस्य पुराणप्रजापतिनिमितपदार्थविषयया तद्विरुद्धया लोकप्रतीत्या यावन्निराक्रियमाणत्व तावन्निरुपमत्व प्रतीयते । एवमय तृतीयो भेद ॥

चतुर्थस्तु ।

**मन्ये च निपतन्त्यस्याः कटाक्षा दिक्षु पृष्ठत ।**
**प्रायेणाग्रे तु गच्छन्ति स्मरबाणपरम्पराः ॥ २।१६ ॥**

अत्र दिक्षु कटाक्षपात कारणम् । स्मरबाणपरम्परागमन त कायम् । कायकारणयोस्तु कारणस्य नैसगिक प्राग्भावित्व कायस्य तु पश्चाद्भावित्वम् । इह तु विपयय कार्यस्य प्राग्भाविनोपनिबन्धनात् पश्चाद्भावित्वेन च कारणस्य कटाक्षा दिक्षु पृष्ठत पश्चात्पतन्ति अग्रे स्मरबाणपरम्परा गच्छन्तीति । अत्र निमित्त कार्यस्य शीघ्रमेवोत्पाद । तेनेद निमित्ततो लोकातिक्रान्तगोचर वचनम् । अतोऽतिशयोक्ति ।

इति महाश्रीप्रतीहारेन्दुराजविरचितायामुद्भटालंकार
सारसंग्रहलघुवृत्तौ द्वितीयो वर्ग ॥



# तृतीयो वर्गः ।

यथासंख्यमथोत्प्रेक्षा स्वभावोक्ति तथैव च ।
अपरे त्रीनलङ्कारान् गिरामाहुरलङ्कृतौ ॥ १ ॥ (३७)

**यथासंख्यम् ।**

**भूयसामुपदिष्टानामर्थानामसधर्मणाम् ।**
**क्रमशो योऽनुनिर्देशो यथासंख्य तदुच्यते ॥ २ ॥ (३८)**

पूर्वमुद्दिष्टानामर्थानां यदा क्रमेणार्थान्तराण्यनुनिर्दिश्यन्ते तदा यथासंख्याख्योऽलङ्कारः । तत्र हि संख्योपलक्षितक्रमानतिक्रमेण शब्देनानुपात्तोऽपि पदार्थानामन्वयः समाश्रीयते । अतो यथाक्रमं पदार्थानामन्वयध्वननादेतस्यालङ्कारस्य यथासंख्यता । स चालङ्कारो बहूनामल्पशोऽप्युपनिबध्यमानो यतः शोभाबद्धो भवत्यतो भूयसामित्युक्तम् । द्वयोर्हि तस्योपनिबध्यमानस्य यावच्चतुर्गुणत्वादिरूपतयोपनिबन्धो न कृतः तावच्छोभापेतत्वं न भवति । भूयसां पुनरर्थानां तद्यथासंख्यमल्पेनैव प्रयासेन रम्यं भवति । तत्र हि तस्य द्विगुणस्य त्रिगुणस्य वोपनिबन्धे शोभातिशयो जायते । यदुक्तम्—

तद्द्विगुणं त्रिगुणं वा बहुषूद्दिष्टेषु जायते रम्यम् ।
यत्तेषु तथैव ततो द्वयोस्तु बहुशो निबध्नीयात् ॥ इति ।

(रुद्रट—का ७-२५)

ननु **मृणालहंसे**त्यादावुपवर्णयिष्यमाणे उदाहरणे मृणालादिभ्य उपमानेभ्यो बाह्वादीनामुपमेयानां विशेषख्यापनाद्व्यतिरेकालङ्कारेण सहृदयहृदयाण्यावर्ज्यन्ते न तु यथासंख्येन तत्कथं यथासंख्यमलङ्कार इत्याशङ्क्योक्तम्—**असधर्मणाम्**—इति । यत्रापि हि साधर्म्याभावादुपमानोपमेयभावाभावेन व्यतिरेकादेरुपनिबन्धाभावस्तत्राप्ययं शोभातिशयमावहतीत्यर्थः ।

कज्जलहिमकनकरुच सुपर्णवृषहसवाहना श व ।
जलनिधिगिरिपद्मस्था हरिहरचतुरानना ददतु ॥ इति ।
( रुद्रट—का ७ ३६)

अत्र हि हरिप्रभृतीना त्रयाणामुद्दिष्टाना कज्जलरुक्त्व सुपर्णवाहनत्व जलनिधिस्थत्वादयो धर्मा क्रमेणानुनिर्दिष्टा । न च तत्र परस्परसाधर्म्य विद्यते । अथ च क्रमपर्यालोचनया अर्थानामानुरूप्येण समन्वयप्रतीते शोभातिशयो विद्यते । तेनास्य साधर्म्याद्यभावेपि पृथगलकारताप्रतिलम्भाद्यत्र साधर्म्यादि विद्यत तत्राप्यलकारत्व दुर्निवारम् । अतो—**मृणालहसे**त्यादिके उदाहरणे यथासरयमङ्गभत व्यतिरेकालकारस्य द्रष्टव्यम् । तेनायमङ्गाङ्गिभावे सकर । यद्वक्ष्यति—

परस्परोपकारेण यत्रालकृतय स्थिता ।
स्वातन्त्र्यणात्मलाभ नो लभन्त सोपि सकर ॥ इति ।

अतो यथासरय पृथगलङ्कारत्वेनोपदिष्टम् ।

तस्योदाहरणम् ।

**मृणालहसपद्मानि बाहुचङ्क्रमणाननैः ।
निर्जयन्त्यानया व्यक्त नलिन्यः सकला जिता ॥ *१ ॥**

अत्र बाहुचङ्क्रमणाननानामुद्दिष्टाना यथाक्रम मृणालहसपद्मान्यनुनिर्दिष्टानि । तद्वशेन च शब्दानुपात्तस्यापि तदन्वयस्य गर्भीकृतत्वेन च क्रमभणितिसद्भावाद्यथासरयमलकार ॥

**उत्प्रेक्षा ।**

**साम्यरूपाविवक्षाया वाच्येवाद्यात्मभि पदै ।
अतद्गुणक्रियायोगादुत्प्रेक्षातिशयान्विता ॥ ३ ॥ (३९)**

यत्रेवादिपदनिबन्ध साम्यस्य च रूप न विवक्ष्यते तत्रोत्प्रेक्षाख्योलकार । नन्वेव सत्यसभवा नाम लक्षणदोष प्राप्त द्योत्यस्योपमानोपमेयभावस्याभावे सति इवादीनामप्रयोगप्रसगादित्याशङ्क्योक्तमतद्गुणक्रियायोगादिति । द्रव्यधर्म सिद्धो गुण साध्यस्वभावस्तु क्रिया । इव

खल विश्व स्वत त्रपरत त्रपदाथात्मकत्वाद्विविधम् । यश्च स्वत त्र पदार्थ स धमीत्यभिधीयते । तच्च इद तदिति सवनामप्रत्यवमर्शयोग्यत्वाद्व यम् । परत न्त्रस्य पदाथस्य धमरूपता । तस्य च द्वैवि य सिद्धसाध्यताभेदात् । तत्र य सिद्धा धर्म स गणो यस्तु सा य सा क्रिया । एतावन्तश्च लौकिका पदाथा । सामान्यादीनामत्रैव प्रातीतिकेन रूपेणान्तर्भूतत्वात् । अत्र असाप्रकृतो योथस्तस्य ये क्रियागुणा अनन्तरोक्तलक्षणास्तद्योगात्साम्यरूपाविवक्षायामपि इवादिश दप्रवृत्तिरविरुद्धा । यत्र किलोपमानोपमेयभावेन साम्य तत्रोपमानसादृश्यादुपमानवर्तिना क्रियागुणानामुपमेये प्रतीतिर्भवति । उत्प्रेक्षायामपि च योसावस अप्रकृतस्तस्य ये क्रियागणास्ते तस्मिन्नप्रकृते वस्तुन्युपमानतयानुल्लिङ्गितेपि प्रकृते वस्तुन्यासज्यन्ते । तेनातद्गुणक्रियायोगादस्य इवादिवाच्यत्वम् । अत एवान्यधर्माणा स्वधर्मिभिताद्वस्तन उत्कलितानां रसभावाद्यभि यक्त्यनुगणतया वस्त्वन्तराध्यस्तत्वेन ल प्रकर्षाणामीक्षणादियमत्प्रेक्षा । नन्वेवमपि सुतरामसभव । न हि वस्त्वन्तरधर्मा वस्त्वन्तरे समासङ्क्त शक्या इत्याशङ्क्योक्तम् —**अतिशयान्विता**— इति । पुराणप्रजापतिविहितरूपविपर्यासेन कविवधसा पदाथस्य गुणातिशयविवक्षया रूपान्तरमप्यासङ्क्तु शक्यते इत्यर्थ ।

इय चोत्प्रेक्षा बहिरसभवत पदाथस्य सभवद्रूपतयोपवर्णनाल्लोकातिक्रान्तविषया सभावना । तस्याश्च द्वैविध्य भावस्याभावस्य च बहिर सभवत उपवर्ण्यमानत्वात् । तदाह—

**लोकातिक्रान्तविषया भावाभावाभिमानत ।**
**सभावनेयमुत्प्रेक्षा**

यय लोकातिक्रान्तविषया सभावना उत्प्रेक्षा सा भावस्याभावस्य चाभिमानाद्द्वैविध्य भजत इत्यथ ।

नन्विवाद्युपनिबन्धे सति यद्युत्प्रेक्षा भवतीत्युच्यते एव सति

चन्दनासक्तभुजगनिश्वासानिलमूर्छित ।
मूर्छयत्येष पथिकान्मधौ मलयमारुत ॥

इत्येवमादाविवादेरप्रयोगादुत्प्रेक्षात्वाभावप्रसङ्ग इत्याशङ्क्याह—

**वाच्येवादिभिरुच्यते ॥ ४ ॥ ( ४० )**

द्विविधा खलूत्प्रेक्षा । काचिदिवादिप्रयोगे सति भवति काचित्त्वप्रयुज्यमानेष्वपीवादिष्वर्थसामर्थ्यादवगम्यमानेषु । तत्र या वाच्या स्वकण्ठेनेवादिभिर्वक्ति या सा इवादिभिरुच्यते । यात्वर्थसामर्थ्याक्षिप्तैरिवादिभिरवगम्यते तत्रेवादीनामप्रयोगः । चन्दनासक्तभुजगेत्यादौ न मलयमारुतस्य यदेतन्मन्मथाविर्भावनिबन्धनत्वात्पथिकमूर्छितत्वं तत्र भुजगनिश्वासमूर्छितत्वे कारणत्वेनोत्प्रेक्ष्यमाणे इवाद्यर्थसामर्थ्यादवगम्यते तेनेवादीनामप्रयोगः । इवादिशब्दसामर्थ्यावसेयायामेवोत्प्रेक्षायामिवादीनां प्रयोगात् ।

तत्र भावाभिमानेनोत्प्रेक्षायां तस्या गुणयोगाश्रयेण प्रवृत्ताया उदाहरणम् ।

**अस्याः सदार्कबिम्बस्थदृष्टिपीतातपैर्जपैः ।**
**श्यामिकाङ्केन पतितं मुखे चन्द्रभ्रमादिव ॥ ५२ ॥**

अस्या मुखे जपैर्हेतुभूतैः श्यामिकाङ्केन पतितमिति सम्बन्धः । अत्र जपासक्ता भगवती अर्कमवलोकयतीति तस्याः शशाङ्कसदृशे मुखे श्यामिका सञ्जाता । तच्चात्र तस्याः श्यामिकाया जन्म अतिशयोक्त्या पातरूपतया प्रतिपादितं पतितमिति । सा चात्र श्यामिका शशिलाञ्छनेन शशेन तुल्या । अतस्तस्याः शशिलाञ्छनशशतुल्यत्वात्परार्जनोपमेयं रूपकं श्यामिकैवाङ्क इत्युपनिबद्धम् । तस्य चाङ्कस्य श्यामिकोपरक्तस्य भगवतीवदननिपाते कारणत्वेनेन्दुभ्रान्तिरुत्प्रेक्षिता यदेतच्छशिनो लाञ्छनं श्यामिकारूपं तद्भगवतीवदनमिन्दुभ्रान्त्या निपतितमिति । इन्दुभ्रान्तिश्च गुणः सिद्धरूपत्वे सति द्रव्यधर्मत्वात् । न च चात्र शशसदृशी श्यामिका चैतन्यशून्यत्वेन भगवतीवदनमिन्दुभ्रान्त्या न गोचरीकरोति । अथ च तस्याः शशभावमापादिताया इन्दुभ्रमलक्षणेन चेतनधर्मेण सम्बन्धो निबद्धः । तेनात्र तस्य वस्त्वन्तरस्य चेतन

स्य योऽसौ गुणो भ्रमलक्षणस्तद्योगादिवादे प्रवृत्ति । इ दुभ्रमश्च भाव रूपो गुण शशीकृतश्यामिकाकर्तृकतया कविनिबद्धेन वक्त्रा भगवताभिमानेनाध्यवसित । तेनेयमतद्गुणयोगेन भावाभिमानेन उत्प्रेक्षा ।

एव क्रियायोगाध्यासाद्भावाभिमानेन योत्प्रेक्षा तस्यामुदाहार्यम् ।

अभावविषयाया पुन क्रियाध्यासेन प्रवृत्तायास्तस्या उदाहरणम् ।

कपोलफलकावस्या कष्ट भूत्वा तथाविधौ ।
अपश्यन्ताविवान्योन्यमीदृक्षा क्षामता गतौ ॥ *३ ॥

अत्र कपोलफलकयोस्तपोवशात्क्षामत्वमापन्नया परस्परादर्शनमभावरूप साध्यत्वात्क्रियारूप क्षामताया कारणतयोत्प्रेक्षितम् । तेनेयमतत्क्रियायोगादभावाभिमानेनोत्प्रेक्षा ।

एवमतद्गुणयोगादभावाभिमानेन या उत्प्रेक्षा तस्यामुदाहार्यम् ॥

**स्वभावोक्ति[*] ।**

**क्रियाया सप्रवृत्तस्य हेवाकाना निबन्धनम् ।**
**कस्यचिन्मृगडिम्भादे स्वभावोक्तिरुदाहृता ॥५॥ (४१)**

मृगबालादे स्वसमुचिते व्यापारे प्रवृत्तस्य ये हेवाका स्वजात्यानुरूप्येणाभिनिवेशविशेषास्तदुपनिबन्ध स्वभावोक्ति । तस्याश्चालकारत्वमसाधारणपदार्थस्वरूपध्वननात् ।

तस्या उदाहरणम् ।

क्षण नष्टार्धवलित शृङ्गेणाग्रे क्षण नुदन् ।
लोलीकरोति प्रणयादिमामेष मृगार्भक ॥ *४ ॥

नष्टेति जा तनशाविभाषा—इत्यनुनासिकलोपस्य विकल्पितत्वादप्रवृत्ति । अत्र मृगपोतकस्य मातरमिव वत्सला भगवती प्रणयनिर्भरेण चेतसा व्याकुलीकुर्वत स्वभावो निबद्ध क्षणमपरिदृश्यमानत्वमर्धकायेन परिवृत्ति शृङ्गेण च नोदनमित्येवमात्मा ॥

इति महाश्रीप्रतीहारेन्दुराजविरचितायामुद्भटालंकारसारसंग्रहलघुवृत्तौ तृतीयो वर्ग ॥

## चतुर्थो वर्ग ।

**प्रेयोरसवदूर्जस्वि पर्यायोक्त समाहितम् ।**
**द्विधोदात्त तथा श्लिष्टमलङ्कारान्परे विदु ॥ १ ॥ ( ४२ )**

प्रेयोरसवादिति समुदायान्मतुप् । **श्लिष्टमिति** । तथा उदात्तवद्द्विविध श्लिष्टमित्यर्थ । विप्रतिपत्तिनिरासार्थ चात्र श्लिष्टस्य द्वैविध्यमुक्तम् । **भामहो** हि–

तत्सहोक्त्युपमाहेतुनिर्देशात्त्रिविध यथा ।

इतिश्लिष्टस्य त्रैविध्यमाह । अतो विप्रतिपत्तिनिरासाय तथेत्युक्तम् । उदात्ते तु द्विधेत्ययमनुवादो दृष्टा तत्वार्थ । यथा उदात्तस्य द्वैविध्य प्रमाणोपपन्नत्वादङ्गीकृत तथा श्लिष्टस्यापि तदङ्गीकर्त व्यमित्यर्थ ।

**प्रेयस्वत्तावत् ।**

**रत्यादिकाना भावानामनुभावादिसूचने ।**
**यत्काव्य बध्यते सद्भिस्तत्प्रेयस्वदुदाहृतम् ॥ २ ॥ (४३ )**

रत्यादयो भावास्त्रिविधा स्थायिनो व्यभिचारिण सात्विकाश्च । तत्र

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भय तथा ।
जुगुप्साविस्मयसमा स्थायिभावा प्रकीर्तिता ॥
निर्वेदग्लानिशङ्काख्यास्तथा सूयामदश्रमा ।
आलस्य चैव दैन्य च चिन्ता मोह स्मृतिर्धृति ॥
व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्य निद्रापस्मार एव च ॥
सुप्त विबोधोमषश्चाप्यवहित्थमथाग्रता ।
मति र्याधिस्तथोन्मादस्तथामरणमेव च ॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिण ।
त्रयस्त्रिशदमी भावा ॥
स्तम्भ स्वेदोथ रोमाञ्च स्वरभेदोथ वेपथु ।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्विका स्मृता ॥

एतेषा पञ्चाशत्सङ्ख्याना भावाना सूचकाश्चत्वारोनुभावादय । ते चानुभावो विभावो व्यभिचारी स्वशब्दश्च । तत्रानुभावश्चतुर्विध आङ्गिको वाचिक सात्विक आहार्यश्च । आङ्गिको हस्ताभिनयादि । वाचिक काक्वादिप्रयोग । सात्विक स्तम्भादि । आहार्यस्तु प्रतिशीर्षकञ्चुकादि । एवमयमनुभावश्चतु सङ्ख्य कार्यत्वात्कारणभूतान्भावान्गमयति । विभावस्तु द्विविध आलम्बनोद्दीपनरूपत्वात् । तत्रालम्बनविभावो यदाश्रयेण रत्यादीनामुदय यथा रामादे सीतादि । उद्दीपनविभावस्तु यद्वशेन रत्यादीना भावानामतिशयेन दीप्तता भवति यथा ऋतुमाल्यानुलेपनादि । एवमेष द्विविधो विभावो रत्यादीना कारणभूत । स च कारणत्वात्कार्यभूतान् रत्यादीन्गमयतीति । यथातिबहलनील जलदोदयो वृष्टिम् । यथा हि कार्यस्य सुविवेचितस्य कारण प्रत्यव्यभिचारिता एव कारणस्यापि सुविवेचितस्य काय प्रत्यव्यभिचारिता व्यवहारे बाहुल्येन दृश्यते । अतो विभाव कारणत्वाद्रत्यादीन् काय भूतान् गमयति । व्यभिचारी तु रत्यादिकाना स्थायिना भावानामवस्थाविशेषरूपो निर्वेदादि । स च सहचारित्वात्स्थायिनो भावान्प्रतिपादयति रथस्यैकमिव चक्र चक्रान्तरम् । स्वशब्दस्तु रत्यादि । स च वाचकत्वाद्भावान् गमयति । रत्यादीना च शब्दाना यद्यप्यनुभावैकगोचरस्वलक्षणस्वभावरत्याद्यवगतिनिबन्धनत्व नोपलभ्यत तथाप्यशेन रत्याद्यवगतिनिबन्धनत्वमनुभावादिवद्व्यवस्थित एव । यथा खल्वनुभावादयो न स्वलक्षणतया भावानवगमयन्ति अपि तु सामान्यलक्षणतया तद्वत्स्वशब्दा अपीत्यास्ताम् ।

एवमेते भावानामवगतिहेतवश्चत्वार । यदुक्त **भट्टोद्भटेन—चतूरूपा भावा**—इति ।

तदेषा रत्यादिकानां भावाना पञ्चाशत्सङ्ख्यानां व्यनुभावादिभिश्चतु सङ्ख्यै समस्तत्वेन व्यस्तत्वेन च यथायोग सूचनानि स्वलक्षण **स्वरूपाणा** सामान्यावस्थोदितानां प्रतिपादनानि ते का यमुपनिबध्यमान प्रेयस्वत् । प्रेय शब्दवाच्येन प्रियतरेण रत्यालम्बनेन विभावनेन

रतिरुपलक्ष्यते । तया च साहचर्याद्रत्यादयो भावा पञ्चाशदवगम्य ते । एव च भावका यस्य प्रेयस्वदिति लक्षणया व्यपदेश । अत्र च भावा नामलकारता का यमलकार्यम् ।

तस्योदाहरणम् ।

इय च सुतवाल्लभ्यान्निर्विशेषा स्पृहावती ।
उल्लापयितुमारब्धा कृत्वेम क्रोड आत्मनः ॥ *१ ॥

आत्मन क्रोडे कृत्वेति सबन्ध । अत्रात्मनो वक्षसि निधानमाङ्गिको-भिनय उल्लापन सान्त्वन वाचिक । इममिति इदशब्देन परामृष्टो य मृगार्भक स आलम्बनविभाव । वाल्लभ्योन्मीलितश्चौत्सुक्यात्मा व्यभिचारिभाव । सुतवाल्लभ्यनिर्विशेषत्वेन हि स्पृहाया रतेरौत्सुक्यभेदाभि सबन्ध प्रतीयत । स्वश दस्तु स्पृहेति । एवमय रत्यात्मको भावो वात्सल्य स्वभावश्चतुर्भिरनुभावादिभिरत्रावगमित ।

अन्येष्वपि भावेष्वेवमुदाहार्यम् ॥

**रसवत ।**

**रसवद्दर्शितस्पष्टशृङ्गारादिरसादयम ।**
**स्वशब्दस्थायिसचारिविभावाभिनयास्पदम ॥ ३ ॥ ( ४४ )**
**शृङ्गारहास्यकरुणरौद्रवीरभयानका ।**
**बीभत्साद्भुतशान्ताश्च नव नाट्ये रसा स्मृता ॥४॥ (४५)**

एते च शृङ्गारादयो नव यथायोग चतुर्वर्गप्राप्त्युपायतया तदितर-परिहारनिब धनतया च रत्यादीना स्थायिना नवाना भावाना य परिपोषस्तदात्मका अतस्तथाविधेन रूपेणास्वाद्यत्वादास्वादभेदनिब-न्धनेन तान्त्रिकेण रसशब्देनाभिधीयन्ते । निर्वेदादौ तु तथाविधस्यास्वा-द्यस्याभावात्प्रवृत्तिनिमित्तभदनिबन्धनस्य तान्त्रिकस्य रसश दस्याप्रवृत्ति । आस्वाद्यत्वमात्रविवक्षया तु तत्रापि मधुराम्लादिवद्रसश दप्रवृत्तिरविरुद्धा यदुक्त शृङ्गारादीन्रसाननुक्रम्य—

रसनाद्रसत्वमेषा मधुरादीनामिवोक्तमाचार्यै ।
निर्वेदादिष्वपि तत्प्रकाममस्तीति तेपि रसा ॥ इति ।

तदाहु —

चतुर्वर्गेतरौ प्राप्य परिहार्यौ क्रमाद्यत ।
चैतन्यभेदादास्वाद्यात्स रसस्तादृशो मत ॥ इति ।

स इति चैतन्यभेद इत्यर्थ । तादृश इत्यनेनास्वादविशेषनिबन्धनत्व शृङ्गारादिष तान्त्रिकस्य रसशब्दस्योक्तम् । एषा च शृङ्गारादीना नवाना रसाना स्वशब्दादिभि पञ्चभिरवगतिर्भवति । यदुक्त **भट्टोद्भटेन**—**पञ्चरूपा रस।** —इति । तत्र स्वशब्दा शृङ्गारादेर्वाचका शृङ्गारादय शब्दा स्थायिनो रसानामुपादानकारणभूता रत्यादयो नव भावा । सचारिणस्तु निर्वेदादयो रसानामवस्थाविशेषरूपा । विभावास्तु तेषा निमित्तकारणभूता योषिदादय ऋतुमाल्यानुलेपनादयश्च । आङ्गिकादयस्तु चत्वारो रसाना कार्यभूता अभिनया । एतेषा च स्वशब्दादीना पञ्चाना समस्तव्यस्ततया आस्पदत्वाद्येन काव्येन स्फुटरूपतया शृङ्गारादिरसाविर्भावो दश्यते तत्काव्य रसवत् । रसा खलु तस्यालकार ।

तस्योदाहरणम् ।

**इति भावयतस्तस्य समस्तान्पार्वतीगुणान् ।**
**सभृतानल्पसकल्पः कन्दर्पः प्रबलोभवत् ॥ *२ ॥**
**स्विद्यतापि स गात्रेण बभार पुलकोत्करम् ।**
**कदम्बकलिकाकोशकेसरप्रकरोपमम् ॥ *३ ॥**
**क्षणमौत्सुक्यगर्भिण्या चिन्तानिश्चलया क्षणम् ।**
**क्षण प्रमोदालसया दृशास्यास्यमभूष्यत ॥ *४ ॥**

कदम्बकलिकाकोश कदम्बकलिकाभ्यन्तरम् । अत्र भगवत आभिलाषिकविप्रलम्भशृङ्गारो निबद्ध । तस्य स्वशब्द कन्दर्प प्रबल इति । स्थायी तत्रैव स्वशब्देनोन्मीलित कन्दर्प इति । रतिपरिपोषात्मको हि शृङ्गारो रस । रतिश्च मनोर्म मथात्मिका । अतो रतिविशेषस्य वाचक-

त्वात्कन्दर्प श द स्थायिनोत्र स्वश द । सचारिणश्चौत्सुक्यचिन्ताहर्षा स्वश देनोन्मीलिता । स्वेदरोमाञ्चौच सात्विकौ स्वश दोपातौ । तया-रपिच सचारित्वम् । सात्विकाना स्थायिभावावस्थाविशेषत्वेन निर्वेदादिवत्सचारित्वात् । विभावस्तु इति भावयतस्तस्येति निर्दिष्ट । भगवती हि तत्तद्गुणोपेतत्वेन विभा यमाना विभाव । अभिनयस्त्वत्रापाङ्गाभिनयो निर्दिष्टो दृशा—इति । अतोत्राभिलाषिक शृङ्गाररस स्वश दादिभि पञ्चभिरभि यज्यते ।

एवमन्येपि रसा उदाहार्या ।

रसाना भावाना च काव्यशोभातिशयहेतुत्वात कि का यालङ्कारत्वमुत का यजीवितत्वमिति न तावद्विचार्यते ग्र थगौरवभयात् । रसभावस्वरूप चात्र न विवेचितमप्रकृतत्वाद्बहुवक्त यत्वाच्च ॥

**ऊर्जस्वि ।**

**अनौचित्यप्रवृत्ताना कामक्रोधादिकारणात् ।**
**भावाना च रसाना च बन्ध ऊर्जस्वि कथ्यते ॥५॥ (४६)**

क्वाचित्खलु रसभावाना शास्त्रसविदविरुद्धेन रूपेणोपनिब ध क्रियते क्वचित्तु तद्विरुद्धेन । तत्र यत्र शास्त्रसविदविरुद्धेन रूपेण तेषामुपनिबन्धस्तत्र प्रेयोलकारो रसवदलङ्कारश्चाभिहित । यत्र तु तद्विरुद्धत्व तन्मूललोक यहारविरुद्धत्व च तद्विषयाणा रसभावानामुपनिबन्धे सत्य् र्जस्वित्का य भवति । तत्र हि रागद्वेषमोहकारणका अनौचित्येन रस भावा उपनिबध्यन्ते । अतएव तत्र स्वकल्पनापरिकल्पितत्वेन ऊर्जसो बलस्य विद्यमानत्वादूर्जस्वि यपदेश । ज्योत्स्ना तमिस्रा—इत्यत्र (पा सू ५ २ ११४ ) उर्जस्विश द ।

तस्योदाहरणम् ।

**तथा कामोस्य ववृधे यथा हिमगिरेः सुताम् ।**
**सग्रहीतु प्रववृते हठेनापास्य सत्पथम् ॥ *५ ॥**

अत्र सकललोकातिशायिनो भगवतोऽकृतविवाहकुमारीविषयतया हठसग्रह शास्त्रसविद्विरुद्ध प्रवृद्धरागकारणक उपनिबद्धस्तेन ऊर्जस्विता। तत्र कामो ववृधे इत्यय शृङ्गाररसस्य स्वश द तस्य रतिपरिपोषकात्मकत्वेन कामवृद्धिस्वभावत्वात्। कामश दस्त्वेतदन्तर्गत शृङ्गारस्य यासौ स्थायिभूता रतिस्तस्या स्वश द । हिमगिरे सुतामित्यालम्बनविभाव । हठेनेत्यनेनावेगलक्षणो व्यभिचारी भाव प्रतिपादित । अपास्य सत्पथमिति तु मोह । सग्रहीतु प्रववृत इत्याङ्गिकोनुभाव । एवमयमत्र पञ्चभि स्वशब्दादिभिरूर्जस्विलक्षण शृङ्गार सूचित ।

एवमन्येष्वपि रसभावेषूर्जस्वि उदाहार्यम् ॥

## पर्यायोक्तम् ।

**पर्यायोक्त यदन्यन प्रकारेणाभिधीयते ।**
**वाच्यवाचकवृत्तिभ्या शून्येनावगमात्मना ॥ ६ ॥ (४७)**

वाचकस्याभिधायकस्य स्वश दस्य वृत्तिर्व्यापारो वाच्यार्थप्रत्यायनम्। वाचस्य त्वभिधेयस्य व्यापारो वाच्यान्तरेण सहाकाङ्क्षासनिधियोग्यतामाहात्म्यात्ससर्गगमनम्। एवविधश्च यो वाच्यवाचकयोर्व्यापारस्तमन्तरेणापि प्रकारान्तरेणार्थसामर्थ्यात्मनावगमस्वभावेन यदवगम्यते तत्पर्यायेण स्वकण्ठानभिहितमपि सान्तरेण शब्दव्यापारणावगम्यमानत्वात्पर्यायोक्त वस्तु । तेन च स्वसश्लेषवशेन काव्यार्थोलक्रियते ।

तस्योदाहरणम् ।

येन लम्बालक: साश्र: करघातारुणस्तन ।
अकारि भग्नवलयो गजासुरवधूजन ॥ *६ ॥

सोपि येन कृत प्लुष्टदेहेनाप्येवमाकुल ।
नमोस्त्ववार्यवीर्याय तस्मै मकरकेतवे ॥ *७ ॥

अत्र लम्बालकत्वादय कार्यरूपत्वात्कारणभूत गजासुरवध वाच्यवाचकव्यापारास्पृष्टमपि गमयन्ति । तेन च तथाविधया विच्छित्याव-

गम्यमानेनार्थेन ते लम्बालकत्वादयोर्था अलक्रियन्ते । तस्मात्पर्यायोक्तमलकार ॥

**समाहितम् ।**

**रसभावतदाभासवृत्ते प्रशमबन्धनम् ।**
**अन्यानुभावनि शून्यरूप यत्तत्समाहितम् ॥ ७ ॥ ( ४८ )**

इह रसभावाना शास्त्रसमयाविरुद्धेन तद्विरुद्धेन च रूपेण द्वैवि ध्यमुक्तम् । तत्र ये शास्त्रसमयाविरुद्धा रसभावास्ते रसभावश ब्देनात्र विवक्षिता । तद्विरुद्धास्तु तदाभासा । तेषा रसभावाना तदाभासाना च या वृत्ति स्वाश्रयसबन्धात्मिका तस्या प्रशमे निबध्यमाने समाहितालकारो भवति । तत्र हि तेषा रसभावाना समाधान समाधि परिहारो भवति । समाहितमिति भावे क्त । ननु यदि तस्मिन्का व्ये रसादीना वृत्ति परिह्रियते एव सति पूर्वरसादिनिवृत्त्या रसाद्य तरोपनिबन्धाद्रसवदाद्यलकारानुप्रवश प्रसक्त इत्याशङ्क्योक्तम्–**अन्यानुभावनि - शून्यरूपा**मिति । अन्यस्य रसाद्य तरस्य येनुभावादयस्तैर्नि शेषेण शून्य रूप यस्य तत्तथोक्तम् । यत्र पूर्वेषा रसादीना वासनाया दाढर्येन तेषूपशान्तेष्वपि रसाद्यन्तराणा न स्वरूपमाविर्भवति आविर्भवदपि वा कार्यवशेन केनचित्तिरोधीयते तत्र समाहितालकारो भवति ।

तस्योदाहरणम् ।

**अथ कान्ता दृश दृष्ट्वा विभ्रमाच्च भ्रम भ्रुवो ।**
**प्रसन्न मुखरागच रोमाञ्चस्वेदसकुलम् ॥ *८ ॥**
**स्मरज्वरप्रदीप्तानि सर्वाङ्गानि समादधत् ।**
**उपासर्पद्गिरिसुता गिरिश स्वस्तिपूर्वकम् ॥ *९ ॥**

समादधन्निजे रूपेवस्थापयन् । समादधदित्यभ्यस्तत्वान्नुमोप्रवृत्ति । अत्र भगवता शृङ्गारस्य येनुभावा का तद्दृष्ट्यादयस्तेषामवहित्थेन आकारप्रच्छादनात्मकेन भावेन तिरोधान विहितम् । यदुक्त स्वस्तिपूर्वकमिति । अनेन ह्याकारतिरोधानमपदर्शितम् ॥

**उदात्तम् ।**

**उदात्तमृद्धिमद्वस्तु चरित च महात्मनाम् ।**
**उपलक्षणता प्राप्त नेतिवृत्तत्वमागतम ॥ ८ ॥ ( ४९ )**

ऋद्धि सुवर्णादिधनसपात्ति । तद्युक्त वस्तूदात्तम् । तेन च का यार्थोलक्रियते ।

तस्योदाहरणम् ।

**उवाच च यतः क्रोडे वेणुकुञ्जरजन्मभिः ।**
**मुक्ताफलैरलकार' शबरीणामपीच्छया ॥ *१० ॥**
**पुष्टयेन्द्रनीलवैडूर्यपद्मरागमयावियत् ।**
**शिरोभिरुल्लिखद्यत्र शिखर गन्धमादनम् ॥ *११ ॥**
**उत्तरोपत्यका यस्य प्रधानस्वर्णभूमयः ।**
**महान्मरकतोर्वीध्र पादोपान्त च साश्रितः ॥ *१२ ॥**
**बभूव यस्य पातालपातिन्यां सक्षये क्षितौ ।**
**पतन न तया सार्धमायामस्तु प्रकट्यभूत् ॥ *१३ ॥**

यस्य एवविधरूपता हिमाद्रेर्भगवती सुता इति सबन्ध । क्रोड सूकर । पुष्टयो मणिविशेष । गन्धमादन पर्वतविशेष । उपत्यका पर्वताधरवर्तिना भूमिभागा । प्रधान स्वर्ण कातस्वरादि । उर्वीध्र पर्वत । सक्षय कल्पान्त । भमेरधोगमनाद्भूम्याश्लिष्टस्य प्रदेशस्य भूमिविविक्तत्वाद्धिमवत कल्पान्ते आयाम प्रकटीभत । अत्र रत्नादिसभारो निबद्ध । तेनेदमुदात्तम् । तस्य चालकारत्व लोकातिशायिरत्नादिकार्यध्वननात् ।

एवमेतदृद्धिमद्वस्तुनिबन्धनेनैकमुदात्तमुक्तम् ।

न केवलमृद्धिमद्वस्तूदात्त यावदर्थप्राप्तावनर्थपरिहारे चोद्यताना विपुलाशयाना चेष्टितमपि । तदुक्तम् **चरित च महात्मनाम्** —इति । न च विपुलाशयचेष्टिते उपनिबध्यमाने तस्य शृङ्गारादिरसप्रतिपत्तिहेतुत्वाद्रसवदलकारानुप्रवेशोन सुभण विपुलाशयचेष्टितस्यात्र वस्तवन्तरोपलक्षणत्वेनावान्तरवाक्यार्थीभूतत्वात् । न खल्वत्र महापुरुषचेष्टित

वाक्यतात्पर्यगोचरतामनुभवति अर्थान्तरोपलक्षणपरत्वात् । यत्र च रसास्तात्पर्येणावगम्यन्ते तत्र तेषां वाक्यविश्रान्तिस्थानत्वेन चतुर्वर्गतदितरप्राप्तिपरिहारोपायभूतस्थायिभावपरिपोषात्मनास्वाद्यमानत्वाद्रसवदलकारो भवति । तेन कुतोऽत्र रसवदलकारगन्धोपि । तदुक्तम्—**उपलक्षणतां प्राप्त नेतिवृत्तत्वमागतम्** —इति ।

तस्योदाहरणम् ।

**तस्यादिक्रोडपीनासनिघर्षेपि पुनः पुनः ।**
**निष्कम्पस्य स्थितवतो हिमाद्रेर्भवती सुता ॥ *१४ ॥**

अत्र हिमवतः स्थैर्ये वाक्यार्थीभूते भगवतो वराहवपुषस्त्रैलोक्योद्धरणोद्युक्तस्य चेष्टितं वीररसप्रतिपत्तिहेतुभूतमवान्तरवाक्यार्थत्वादुपलक्षणीभूतम् । आदिक्रोडः आदिवराहः ।

एवं रसान्तरेष्वप्युपलक्षणीभूतेषूदाहार्यम् ।

**श्लिष्टम् ।**

**एकप्रयत्नोच्चार्याणां तच्छायां चैव बिभ्रताम् ।**
**स्वरितादिगुणैर्भिन्नैर्बन्धः श्लिष्टमिहोच्यते ॥ ९ ॥ (५०)**
**अलकारान्तरगतां प्रतिभां जनयत्पदैः ।**
**द्विविधैरर्थशब्दोक्तिविशिष्टं तत्प्रतीयताम् ॥ १० ॥ (५१)**

इह खलु शब्दानामनेकार्थानां युगपदनेकार्थविवक्षायां द्वयी गतिः । अर्थभेदेन तावच्छब्दा भिद्यन्त इति भट्टोद्भटस्य सिद्धान्तः । तत्रार्थभेदेन भिद्यमानाः शब्दाः कचित्तन्त्रेण प्रयोक्तुं शक्याः केचिन्न । येषां हल्स्वरस्थानप्रयत्नादीनां साम्यं ते तन्त्रेण प्रयोक्तुं शक्यन्ते । यत्र तु हलामेकत्वानेकत्वरूपत्वात् स्वराणां चोदात्तत्वानुदात्तत्वादिना स्थानानां चौष्ठ्यदन्त्यौष्ठ्यत्वादिना प्रयत्नानां च लघुत्वालघुत्वादिना भेदस्तेषां तन्त्रेण प्रयोगः कर्तुमशक्यः साधारणरूपत्वात्तन्त्रस्य । तदुक्तम् साधारणं भवेत्तन्त्रमिति । एवं चावस्थिते ये तन्त्रेणोच्चारयितुं शक्यन्ते ते एकप्रयत्नोच्चार्याः । तद्बन्धे सत्यर्थश्लेषो भवति । तदुक्तम्—**एकप्रयत्नो**

**च्चार्याणामिति** । तथा ये तेषामेवैकप्रयत्नोच्चार्याणां **शब्दानां छाया** सादृश्य बिभ्रति तदुपनिब न न रा दश्लिष्टम् श दान्तरे उच्चार्यमाणे तादृश्यवशानानुच्चारितस्यापि शब्दान्तरस्य श्लिष्टत्वात् । तदुक्तम्—**तच्छाया चैव बिभ्रताम् । स्वरितादिगुणैर्भिन्नैर्बन्धः श्लिष्ट-मिति** तथा—**शब्दोक्तिविशिष्टं तत्प्रतीयतामिति** ।

एतच्च श्लिष्टं द्विविधमप्यपमाद्यलङ्कारप्रतिभोत्पादनद्वारेणालङ्कारतां प्रतिपद्यते । अतोऽनेनानवकाशत्वात्तद्विषये अलङ्कारान्तराण्यपोद्यन्ते तेषां विषयान्तरे सावकाशत्वात् । तदुक्तम्—**अलङ्कारान्तरगतां प्रतिभां जनयत्पदैः । द्विविधैरिति** । अलङ्कारान्तराणामत्र प्रतिभामात्रं न तु पदबन्ध इत्यर्थः ।

तदेव शब्दश्लिष्टमर्थश्लिष्टं च लक्षितम् ।

तस्योदाहरणम् ।

**स्वयं च पल्लवाताम्रभास्वत्करविराजिनी ।**
**प्रभातसन्ध्येवास्वापफललुब्धेहितप्रदा ॥ *१५ ॥**
**इन्दुकान्तमुखी स्निग्धमहानीलशिरोरुहा ।**
**मुक्ताश्रीस्त्रिजगद्रत्नं पद्मरागाङ्घ्रिपल्लवा ॥ *१६ ॥**

**अपारिजातवार्तापि नन्दनश्रीर्भुवि स्थिता ।**
**अबिन्दुसुन्दरी नित्यं गलल्लावण्यबिन्दुका ॥ *१७ ॥**

न केवलं तन्न हिमाद्रेरेवाभिभस्य सता यावत्स्वयं चैवंप्रकारेति चशब्दः । अत्र भगवती किसलयवदाताम्रौ भास्वन्तौ दीप्तिमन्तौ यौ करौ हस्तौ ताभ्यां विराजते । प्रभातसन्ध्या तु पल्लववदाताम्रैर्भास्वत आदित्यस्य करैर्मयूखैर्विराजते । अत्र चोभयत्रापि पल्लवादीनां साम्यम् । अतस्तन्त्रेणोच्चारणस्य सम्भवादयमर्थश्लेषः ।

अस्वापफललुब्धेहितप्रदेत्यत्र तु भगवतीपक्षे अस्वापं सुखेनाप्तुं यन्न शक्यते फलं तत्र ये लुब्धास्तेभ्य ईहितमीप्सितं प्रददातीत्यर्थः । प्रभातसन्ध्यापक्षे तु स्वापस्य निद्रानुभवस्य यत्फलं श्रमनिवृत्तिलक्षणं तत्र यो

न लुब्ध सध्योपासनप्रवृत्तत्वात्तद्विषय हितमदृष्ट समर्पयतीत्येवविधोर्थ ।

अत्र च पूर्वस्मिन्पक्षे ऐकपद्यात् थाथादिस्वरेणान्तोदात्तत्वम् (पा सू ६-२ १४४)। उत्तरत्र पुनरस्वापफललुब्धे इति हितप्रदेति च अनयोर्भिन्नपदत्वान्नास्वरत्वम् अस्वापफललुब्ध इत्यस्य-तत्पुरुषे तुल्यार्थेति (पा सू ६-२-२) पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वात् हितप्रदेत्यस्य तु थाथादिस्वरेणा तोदात्तत्वात् । तेनात्र स्वरभेद । अस्वापेति च अकारस्य फललु ध इति च एकारस्योभयो पक्षयोयथायोग लाघवालाघवाभ्या प्रयत्नभेदोपि । अतस्तन्त्रेणोच्चारयितुमशक्यता । एकस्मिस्त्वत्र श ब्दे समुच्चारिते श दान्तरस्य तत्साद्दश्यात्प्रतिपत्ति । अतोय शब्दश्लेष ।

एतयोश्च द्वयोरप्यर्थश्लेषश दश्लेषयोरुपमाप्रतिभोत्पत्तिहेतुत्वम् । प्रभातसध्या ह्यत्रोपमान भगवती उपमेया इवश दश्चोपमानोपमेयभाव द्योतयति । शब्दव्यतिरेकेण तु साधारणो धर्मोर्थाधिकरणोत्र न विद्यते । तेन नेयमुपमा अपि तु श्लेष उपमाप्रतिभोत्पत्तिहेतु ।

इ दुका तमुखीत्यत्र भगवती च द्रवत्सु दर मुख यस्या सा तथाविधा । तथा स्निग्धदीर्घकृष्णकेशी । मुक्ता परित्यक्ता अश्रीरशोभा यया सा तथाविधा । त्रैलोक्योत्कृष्टा च । तथा पद्मवत्कमलवत् रागो लौहित्य ययोस्तथाविधौ पादपल्लवौ यस्यास्तद्रूपा । यदा त्वसौ भगवती रूपकप्रतिभोत्पत्तिनिब धनेन श्लेषेण त्रैलोक्योदरवर्तिमाणिक्यसभाररूपतया रूप्यते तदा प्रकृतोर्थश्च द्रका ते द्रनीलमौक्तिकशोभापद्मरागैरवच्छादितरूपतया प्रतीयते साक्षादेवविधरत्नमयावयवयोगित्वात् त्रिभुवनोदरान्तर्गतरत्नसमृद्धिरूपेति ।

अत्र च मुक्ताश्रीरित्यत्र स्वरभेदो विद्यते बहुव्रीहिपक्षे बहुव्रीहौ प्रकृत्येति (पा सू ६ २-१)—पूर्वपदप्रकृतिस्वरत्वात् तत्पुरुषे तु समासान्तोदात्तत्वात् (पा सू ६-१-१२३—पा सू ६-१-२२३)। शिष्टाना तु शब्दाना स्वरभेदो नास्ति । प्रयत्नगुरुत्वागुरुत्वे तु त्रिजगद्रत्नशब्दव्यतिरिक्तेषु तत्तद्वर्णविषयतया विद्येते । तेन तत्र शब्दश्लेषता । त्रिजगद्रत्नशब्दस्य तूभयत्रापि कस्यचिद्विशेषस्याविद्यमानत्वादर्थ श्लेषत्वम् ।

अपारिजातवार्तापीत्यत्र भगवत्यजातशत्रुत्वादपगतशत्रुसमूहवार्ता । तदीया च शोभा सर्वस्यचित्तमावर्जयतीत्यतो नन्दना श्रीर्यस्यास्तथाविधा । उदकमध्यवर्तितया च योसौ अप्सु उदके प्रतिबिम्बित इन्दुस्तद्वत्सुन्दरी । नित्य च गलल्लावण्यप्रवाहा । यदात्वसो भगवती नन्दनश्रीशब्दस्य देवोद्यानशोभालक्षणार्थान्तराभिधायित्वाद्रूपकप्रतिभोत्पत्तिनिबन्धनेन श्लेषेणैतद्भावमापद्यते तदा तत्समाश्रयत्वेन अपारिजातवार्तापीत्यादिपदपर्यालोचनया विरोधप्रतिभाहेतोरपरस्यापि श्लेषस्याविर्भावो भवति । न खलु देवोद्यानशोभा अविद्यमानपारिजाताख्यवृक्षविशेषवृत्तान्ता भवति । न चासौ भूमौ तिष्ठति । अबिन्दुसुन्दरीत्यत्र तु बिन्दुभिर्यस्या सौन्दर्यं नास्ति तस्या कथ लावण्यबिन्दव प्रसरेयुरिति विरोधप्रतिभोत्पत्तिहेतु श्लेष ।

अपारिजातवार्तापीत्यत्राप्यपगतारिजात नातेति— बहुव्रीहौ प्रकृत्येति (पा सू ६ २-१) पूर्वपदप्रकृतिस्वरत्वम् । तत्पुरुषपक्षे त्वन्तोदात्तत्वम् (पा सू ६ १-१२३—पा सू ६-१-२२३) । अबिन्दसुन्दरीत्यत्र अबिन्दुवत्सुन्दरीत्युपमानत्वात्-तत्पुरुषे तल्यार्थेति (पा सू ६-२-२)— अबिन्दुशब्दस्य प्रकृतिस्वर । तस्य च सप्तम्यन्तपर्वपदत्वादनेनैव सूत्रेण (पा सू ६-२-२) प्रकृतिस्वरेणाद्युदात्तत्वम् । अबिन्दसुन्दरीत्यत्र त्वव्ययत्वान्नञ पूर्वपदप्रकृतिस्वरत्वेन (पा सू ६-२-२) तदेव । तेनात्र स्वरभेदस्याभाव । प्रयत्नभेदकृतात्तु चाकारवैचित्र्याच्छब्दश्लेषता ॥

इति महाश्रीप्रतीहारेन्दुराजविरचितायामुद्भटालकारसार-
सग्रहलघुवृत्तौ चतुर्थो वग ॥ ४ ॥

# पञ्चमो वर्गः ।

अपह्नुति विशेषोक्ति विरोध तुल्ययोगिताम् ।
अप्रस्तुतप्रशसा च व्याजस्तुतिनिदर्शने ॥ १ ॥ ( ५२ )
उपमेयोपमा चैव सहोक्ति सकर तथा ।
परिवृत्ति च जगदुरलकारान्परे गिराम् ॥ २ ॥ ( ५३ )

**अपह्नुति ।**

अपह्नुतिरभीष्टा च किंचिदन्तर्गतोपमा ।
भूतार्थापह्नवेनास्या निबन्ध क्रियते बुधै ॥ ३ ॥ ( ५४ )

यत्र भूत विद्यमानमुपमेयलक्षणमर्थमपह्नुत्योपमानरूपारोपेणोपमानोपमेयभावो [ वगम्यते सापह्नु-] तिरलङ्कार । अत्र च प्राकरणिकस्य विद्यमानस्यार्थस्या [ पह्नवादप्राकरणिकार्थाध्यारोपेण ] यद्विद्यमानो स्फुटेनरूपेणोपमानोपमेयभावश्चकास्तीत्युक्तम्— **किंचिदन्तर्गतोपमा**— इति ।

तस्या उदाहरणम् ।

एतद्धि न तप. सत्यमिद हालाहल विषम् ।
विशेषत शशिकलाकोमलाना भवादृशाम् ॥ * ॥

अत्र प्राकरणिकस्य तपस स्वरूपमपह्नुत्य हालाहलविषविशेषरूपताध्यारोपेण तत्सादृश्यमवगमितम् । तच्चात्र हालाहलविषसादृश्यमपमेयस्यापह्नुतत्वान्न स्फुटरूपम् । हालाहलाख्या विषभेदा य शीघ्र व्यापादयति ॥

**विशेषोक्तिः ।**

यत्सामग्र्येपि शक्तीना फलानुत्पत्तिबन्धनम् ।
विशेषस्याभिधित्सातस्तद्विशेषोक्तिरुच्यते ॥ ४ ॥ ( ५५ )

शक्तीना कारकाणा सामग्र्येपि अविकलत्वे य क्रियाफलस्य किञ्चिद्विशषमवगमयितुमनुत्पत्तेरुपनिबन्ध सा विशेषोक्ति ।

तस्याश्च द्वौ भेदौ । क्वचित्खलु कारणसामग्र्येपि यत्कार्य नोत्पद्यते तस्यानुत्पत्तौ स्वकण्ठेन निमित्तमपादीयते क्वचित्त्वर्थसामर्थ्यादवगम्यते । तदाह—

**दर्शितेन निमित्तेन निमित्तादर्शनेन च ।**
**तस्या बन्धो द्विधा लक्ष्ये दृश्यते ललितात्मक ॥५॥ (५६)**

अदर्शनमनुपादानम् ।

तत्र द्वितीयस्य भेदस्योदाहरणम् ।

**महद्धिनि गृहे जन्म रूप स्मरसुहृद्वय ।**
**तथापि न सुखप्राप्तिः कस्य चित्रीयते न धीः ॥ *२ ॥**

अत्र धनसभारयोग सुरूप व यौवन चेति यान्येतानि सुखप्राप्तौ कारणान्यविकलानि तत्सद्भावेपि क्रियाफलभूताया सुखप्राप्तेरनुत्पत्तिरुप निबद्धा पूर्वोक्ताना सुखहेतूना विस्मयविभावनात्मकविशेषख्यापनाय । अत्र च निमित्त स्वकण्ठेनानुपात्तमप्यर्थसामर्थ्यादवगम्यते विधिवैधुर्यादि । रूपश दोत्र शरीरस्य रूपमात्राव्यभिचारित्वाद्रूपप्रकर्षतात्पर्येणोपात्त । स्मरसुहृद्वयो यौवन । यौवने हि मन्मथोभिमुखी भवति ।

आद्यभेदोदाहरण तु ।

**इत्थ विसष्ठुल दृष्ट्वा तावकीन विचेष्टितम् ।**
**नोदेति किमपि प्रष्टु सत्वरस्यापि मे वचः ॥ *३ ॥**

अत्र प्रश्नत्वरालक्षणकारणसद्भावेपि प्रश्नवचसोनुत्पत्तिरुपनिबद्धा । तया च प्रश्नवचनकारणस्य विस्मयविभावनाख्यो विशेषोवगम्यते । अत्र च निमित्त भगवतीगति(त)विसष्ठलचेष्टितदर्शन स्वकण्ठेनोपात्तम् ॥

**विरोध ।**

**गुणस्य वा क्रियाया वा विरुद्धान्यक्रियावच ।**
**यद्विशेषाभिधानाय विरोध त प्रचक्षते ॥ ६ ॥ ( ५७ )**

यत्र कविना गुणस्य वा क्रियाया वा अथवा द्विर्वाशब्दस्योपात्तत्वात् द्रव्यस्य विरुद्धोऽन्य पदार्थ सजातीयो विजातीयो वा वचसा स्वप्रतिभाप्रसूतेन वर्णनिकात्मना क्रियते कश्चिद्विशेषमवगमयितु स विरोधाख्योलंकार । गुणक्रियाद्रव्याणामुत्प्रेक्षालंकारलक्षणव्याख्यानसमये स्वरूपमुक्तम् । क्रियाकारणमुत्पादन तत्प्रधान वच क्रियावच । कविप्रतिभया खलु पुराणप्रजापतिनिर्मितशुष्कपरुषपदार्थविलक्षणा सरसा पदार्था अभिनवा एव निर्मीयन्ते । अत क्रियावच इत्युक्तम् ।

तस्योदाहरणम् ।

**यद्वा मां किं करोम्येप वाचालयति विस्मय ।**
**भवत्याः क्वायमाकार. क्वेद तपसि पाटवम् ॥ *४ ॥**

अत्र यदेतत्पूर्वमुपक्रान्तम्—वचो मे नोदेति—इति तस्याक्षेपो यद्वेति कृत । कि वा करोमि विस्मयवाचालित सन् ब्रवीमि—भवत्या क्वेति । एष विस्मयो मा वाचालयतीति सबन्ध । अत्राकृते सुकुमाराया पाटवस्य च कठिनकायसाध्यस्य विरोधो भगवतीनिष्ठत्वेनोपनिबद्ध । तेन च विस्मयविभावनाख्यो विशेषोत्र ख्याप्यते । अय चासिद्धस्वभावधर्मनिष्ठत्वाद्गुणविरोध । एव साध्यस्वभावधर्मनिष्ठेपि क्रियाविरोधे उदाहार्यम् । तथा द्रव्यविरोधे गुणक्रियाविरोधे गुणद्रव्यविरोधे क्रियाद्रव्यविरोधे च ॥

**तुल्ययोगिता ।**

**उपमानोपमेयोक्तिशून्यैरप्रस्तुतैर्वच ।**
**साम्याभिधायि प्रस्तावभाग्भिर्वा तुल्ययोगिता ॥७॥ (५८)**

अप्रस्तुतानामेव वा यत्र साम्यमभिधीयते सा तुल्ययोगिता । अतएव प्राकरणिकाप्राकरणिकोभयार्थनिष्ठत्वाभावात्तत्रोपमानोपमेयोक्तिशून्यत्वम् । प्रस्तावभाग्भि प्रस्तुतै साम्याभिधायि वच इति सबन्ध ।

तस्या पूर्वभेदस्योदाहरणम् ।

**त्वदङ्गमार्दव द्रष्टुः कस्य चित्ते न भासते ।**
**मालतीशशभृल्लेखाकदलीना कठोरता ॥ *५ ॥**

त्वच्छरीरसौकुमार्यदर्शनात् कुसुमेष्वपि चेतसि मालत्यादीनां काठिन्यं न भासत इत्यर्थः । अत्र मालत्यादीनामप्राकरणिकानामेवार्थानां कठोरत्वलक्षणं साम्यमुपनिबद्धम् । दृशेरिति तृन् (पा. सू. ३.२.१३५)। तथा च त्वदङ्गमार्दवमिति- न लोकाव्ययनिष्ठा (पा. सू. २.३.६९) --इति षष्ठीनिषेधः ।

द्वितीयभेदस्योदाहरणम् ।

> योगपट्टो जटाजालं तारवी त्वङ्मृगाजिनम् ।
> उचितानि तवाङ्गस्य यद्यमूनि तदुच्यताम् ॥ ७६ ॥

अत्र प्राकरणिकानामपि योगपट्टादीनां भगवतीशरीरे सम्पर्कानौचित्यलक्षणः समानो धर्मो निबद्धः । तारवी त्वग्वल्कलम् । अङ्गस्य शरीरस्य ॥

**अप्रस्तुतप्रशंसा ।**

> **अधिकारादपेतस्य वस्तुनोऽन्यस्य या स्तुतिः ।**
> **अप्रस्तुतप्रशंसेयं प्रस्तुतार्थानुबन्धिनी ॥ ८ ॥ ( ५९ )**

अधिकारादुपवर्णनावसरादपगतस्य प्राकरणिकादपरस्य वस्तुनो यत्रोपनिबन्धः सा अप्रस्तुतप्रशंसा । न चैवमपि तस्या उन्मत्तप्रलापप्रख्यता यतः सा केनचित्सम्बन्धेन प्रस्तुतमर्थमनुबध्नाति । तदुक्तम्- **प्रस्तुतार्थानुबन्धिनी** इति ।

तस्या उदाहरणम् ।

> यान्ति स्वदेहेषु जरामसम्प्राप्तोपभोक्तृकाः ।
> फलपुष्पर्द्धिभाजोऽपि दुर्गदेशवनश्रियः ॥ ७७ ॥

अत्र कृच्छ्रेण गन्तुं शक्यते यस्मिन् देशे तद्गतकाननानां शोभा अप्राकरणिक्य एव स्वदेहजर्जरतयोपवर्णिता । ताभिश्च सादृश्यसम्बन्धेन भगवतीचरितमुपमेयभूतमेवंविधरूपतयावगम्यते । दुर्गेति-सुदुरोरधिकरणे (पा. सू. ३-२ ४८ स्थ वार्तिकम्) इति डप्रत्ययः ॥

व्याजस्तुतिः ।

**शब्दशक्तिस्वभावेन यत्र निन्देव गम्यते ।**
**वस्तुतस्तु स्तुतिः श्रेष्ठा व्याजस्तुतिरसौ मता ॥ ९ ॥ (६०)**

यत्र शब्दानामभिधायकानां या शक्तिरर्थप्रत्यायनी मुख्या तस्या यः स्वभावो नियतार्थनिष्ठत्वात्मकस्तेन निन्दा गम्यते इव न त्वसौ निन्दैव पदार्थपर्यालोचनसामर्थ्योत्थायाः स्तुतौ वाक्यार्थीभूतायामवान्तरवाक्यार्थत्वात् । अत एवाह—**वस्तुतस्तु स्तुतिः श्रेष्ठा** इति । वस्तुत इत्यर्थसामर्थ्यादित्यर्थः । तत्र व्याजस्तुतिर्नामालंकारो भवति । निन्दाव्याजेन हि सा स्तुतिः । अतो व्याजस्तुतिः ।

तस्या उदाहरणम् ।

**धिगनन्योपमामेतां तावकीं रूपसंपदम् ।**
**त्रैलोक्येऽप्यनुरूपो यद्वरस्तव न लभ्यते ॥ *८ ॥**

अत्र यदेतद्धिग्वादोपहतत्वं रूपसंपदः साक्षाच्छब्दव्यापारेण स्पष्टं न तत्स्वात्मपर्यवसितम् अर्थसामर्थ्योत्थलोकोत्तरभगवतीरूपोत्कर्षप्रतिपादनपर्यवसितत्वात् । अतस्तस्यावान्तरवाक्यार्थता । तेनेयं व्याजस्तुतिः । निन्दाव्याजेन रूपोत्कर्षस्य स्तूयमानत्वात् । धिगनन्योपमामिति—उभसर्वतसोः कार्या (पा. सू. १ ४ ४८ इति सूत्रोपरिस्थितवार्तिककारिका) इति द्वितीया ॥

विदर्शना ।

**अभवन्वस्तुसंबन्धो भवन्वा यत्र कल्पयेत् ।**
**उपमानोपमेयत्वं कथ्यते सा विदर्शना ॥ १० ॥ ( ६१ )**

यत्र पदार्थानां संबन्धः स्वयमनुपपद्यमानः सन्नुपमानोपमेयभावे पर्यवस्यति अथवा उपमानोपमेयभावकल्पनया स्वात्मानमुपपादयति तत्र विदर्शना । विशिष्टस्यार्थस्योपमानोपमेयभावात्मकस्योपदर्शनात् ।

तस्या उदाहरणम् ।

**विनोचितेन पत्या च रूपवत्यपि कामिनी ।**
**विधुवन्ध्यविभावर्याः प्रबिभर्ति विशोभताम् ॥ *९ ॥**

विधुश्चन्द्र । विभावरी रात्रि । अत्र रजनिकररहितविभावरीविशोभत्वस्य यदेतत्कर्मत्व तत्कामिनीकर्तृकाया भरणक्रियाया न समन्वय गच्छति । न ह्यन्यस्य सम्बन्धिनी विशोभामन्यो बिभर्ति । अत पदार्थसमन्वयस्यात्रानुपपत्ति । उपमानोपमेयभावस्त्वत्र वाक्यार्थविश्रान्तिस्थान कृष्णरात्रिवद्विशोभता बिभर्तीति ।

एवमेतद्भवति वस्त्वसबन्धे उपमानोपमेयभावकल्पनायामुदाहरणम् ।

यत्र तु पदार्थसमन्वय उपमानोपमेयभावकल्पनया स्वात्मान मुपपादयति तस्य विदर्शनाभेदस्योदाहरणमुद्भटपुस्तके न दृश्यते । तस्य त भामहोदितमिदमुदाहरणम् ।

**अय मन्दद्युतिर्भास्वानस्त प्रति यियासति ।**
**उदय. पतनायेति श्रीमतो बोधयन्नरान् ॥** इति ।

तत्र प्रथमोदयसमयविजृम्भमाणस्वकान्तिरहितस्य भास्वता यदेतदस्तमयौ मुख्य तदुपेतस्य श्रीमत प्रयोज्यकर्तॄन् प्रति पातावसानोदयकमकवबोधे तत्समर्थाचरणलक्षण हेतुकर्तृत्वमपनिबद्धम् । तथाविध खलु भास्वन्त पश्यन्त श्रीमन्तो बुध्यन्ते भास्वत इव सर्वस्योदय पातावसान इति । तांश्चासौ तथावबुध्यमानान् स्वावस्थोपदर्शनेन प्रयुङ्क्ते यथा ममायमुदय पातावसानस्तथा भवतामपीति । अत्र च प्रेषणाध्येषणयोरभावात्त समर्थाचरणलक्षण एव प्रयोजकव्यापार कारीषो यापयति भिक्षा वासयतीति यथा । तत्र च प्रयोज्यप्रयोजकभावेन स्वात्मानमुपपादयितुमुपमानोपमेयभाव आक्षिप्त ह श्रीमन्तो यथा ममायमुदय पतनाय तद्वद्भवतामपीति यूय बुध्यध्वमिति । तेनात्र प्रयोज्यप्रयोजकभावलक्षणेन स्वात्मोपपादनायोपमानोपमेयभावस्याक्षेपाद्वितीयो विदर्शनाया भेद ।

**सकर ।**

स च चतुर्विध सदेहशब्दार्थवर्त्यलकारैकशब्दाभिधानानुग्राह्यानुग्राहकभेदेन ।

तत्र **सदेहसकर**स्तावत् ।

**अनेकालक्रियोल्लेखे सम तद्वृत्त्यसभवे ।**
**एकस्य च ग्रहेन्यायदोषाभावे च सकर ॥ ११ ॥ ( ६२ )**

अनेकस्यालकारस्योल्लेखे चेतस्युपारोहे सदेहसकरो भवति । न त्व कशब्दाभिधानसकरादावपि अनेकालकारोल्लेख सभवति । यथा—

मुरारिनिर्गता नून नरकप्रतिपन्थिनी ।
तवापि मर्ध्नि गङ्गेव चक्रधारा पतिष्यति ॥

अत्र ह्युपमानोपमेयभावस्तत्प्रतिभाहेतुश्च श्लेषोनेकोलकार उल्लिख्यते । उपमानोपमेयभावे तावत् गङ्गोपमान चक्रधारा उपमेया मुरारिनिर्गतत्व साधारणो धर्म । श्लेषस्तत्र नरकप्रतिपन्थिशब्दादात्मान लभते । एकत्र हि नरको दानव अपरत्र त्ववीच्यादि । एतौ च द्वावलकारावेकस्मिन्निव शब्दनुप्रविशत । न ह्युपमानोपमेयभावस्तत्प्रतिभाहेतुर्वा श्लेष समासाद्यभावे इवशब्दादिमन्तरेण स्वरूप प्रतिलभते । तेनात्र द्वावलकारावेकस्मिन्वाचके इव शब्देनुप्रविष्टौ । यदि च अनेलकाराल्लेखे सति सन्देह सकरस्तत एवमादावप्यनेकालकारोल्लेखस्य सभवात्सदेहसकरप्रसङ्ग इत्याशङ्क्योक्तम्—**सम तद्वृत्त्यसभव** इति । तस्यानेकस्यालकारस्य सम युगपद्यादि वृत्तिर्व्यापारोलकार्यालङ्करणात्मको न सभवतीत्यर्थ । पूर्वोक्ते तूदाहरणे मुरारिनिर्गतेति साधारणधर्मोपादानान्नरकप्रतिपन्थिनीति च श्लेषपदोपदर्शनान्नानेकस्यालकारस्य युगपद्वृत्तेरसभव । तन तत्र न सदेहसकरता । ननु यद्यनेकालकाराल्लेखे युगपद्वृत्त्यसभवे च सदेहसकरत्वमेव सति यत्र प्रतिभामात्रेणानेकस्मिन्नलकारे उल्लिख्यमाने यस्य साधक प्रमाणमस्ति स उपादीयते यस्य तु बाधक प्रमाण विद्यत स त्यज्यते । तत्राप्यनेकालकारोल्लेखस्य सम तद्वृत्त्यसभवस्य च सभवात्सदेहसकरत्व प्रसज्जतीत्याशङ्क्योक्तम्—**एकस्य च ग्रहे न्यायदोषाभावे** चेति । न्याय साधक प्रमाण दोषो बाधक प्रमाणम् । यत्रानेकालकाराल्लेखे युगपद्वृत्त्यसभवे च एकतरस्य ग्रहणे साधकबाधके प्रमाणे

समस्तव्यस्ततय न विद्येते तत्र सदेहसकर । तेन नानिष्टप्रसङ्ग । तथाहि यत्र साधकबाधके प्रमाणे सामस्त्येन विद्येते तत्र यस्य साधक प्रमाणमस्ति तस्योपादानाद्बाधकस्य प्रमाणोपेतस्य च त्यागादेकस्य ग्रहण भवति । यत्रापि साधकबाधकप्रमाणयोर्वैयस्त्यनान्यतरस्य विद्यमानता तत्रापि प्रतिभोल्लिख्यमानानेकालकारमध्यात्साधकप्रमाणोपेत स्योपादानात्प्रमाणशून्यस्य चोपक्ष्यत्वात्तथा बाधकप्रमाणोपतस्य परित्यागात्तदितरस्य च प्रोल्लिखितस्य पारिशेष्येणोपादानादेकस्य ग्रहो भवति । यत्र तु साधकबाधकप्रमाणाभावस्तत्र सदेह एव । एवमय सदेहसकरो लक्षित ।

तस्योदाहरणम् ।

**यद्यप्यत्यन्तमुचितो वरे दुस्तेन लभ्यते ।**
**तथापि वच्मि कुत्रापि क्रियतामादरो वर ॥ *१० ॥**

अत्र वरेन्न्दाविति वर एव इदु वर इन्दुरिवेतिरूपकसमासोपमयोर्द्वयोरलकारयोरुल्लख । न च तस्यानेकस्यालकारस्य युगपद्वृत्ति सभवति एकालकारसश्रयणैवालकारस्य कृतकृत्यत्वात् । न चात्र द्वयोमध्यादेकतरस्य ग्रहणाय साधकबाधकप्रमाणयोग । साधक हि प्रमाण विद्यमान विधिमुखेनालकार ज्ञापयेत् । तथा बाधकमपि प्रहातव्यालकार निषेधमुखेनापादेयमलकार प्रोल्लिखित पारिशेष्यादुपादेयतया प्रतिपादयति । अत्र तु द्वयो साधकबाधकप्रमाणयोरभावात्सदेहस्तेन सदेहसकरोलकार ।

**शब्दार्थवर्त्यलकारस्तु ।**

**शब्दार्थवर्त्यलकारा वाक्य एकत्र भासिन ।**
**सकरो वा**

यत्रैकस्मिन्वाक्ये शब्दवर्तिनोर्थवर्तिनश्चालकारा सवर्गमुपयान्ति स शब्दार्थालकार ।

तस्योदाहरणम् ।

**इत्थं स्थितिर्वरार्थी चेन्मा कृथा व्यर्थमर्थिताम् ।**
**रूपेण ते युवा सर्वः पादबद्धो हि किङ्करः ॥ *११ ॥**

वरार्थी भर्त्रर्थी । किङ्करो दासः । अत्र थकारोपनिबद्धोनुप्रासात्मकः शब्दालंकारः । अर्थालंकारश्चार्थान्तरन्यासो विद्यते । तथाह्यत्र मा कृथा व्यर्थमर्थितामित्युपादित्सितेऽर्थेऽर्थित्वस्याकरणं यदुपनिबद्धं तदनुपपद्यमानं तया सम्भाव्य तत्समर्थनायोक्तम्—रूपेण ते युवा सर्वः पादबद्धो हि किङ्करः—इति । यो गुणोत्कर्षशाली स नार्थयते अपित्वर्थ्यते यथा रत्नादि । त्वं च रूपवत्त्वाद्गुणोत्कर्षशालिनी । तस्मादुपादित्सितेऽर्थे तवार्थित्वमयुक्तमिति । तेनायं शब्दार्थवर्त्यलंकारसंकरः ।

**एकशब्दाभिधानसंकरस्तु ।**

**एकवाक्यांशप्रवेशाद्वाभिधीयते ॥ १२ ॥ ( ६३ )**

एकस्मिन्वाक्यांशे वाक्यैकदेशे यत्रानेकस्यालंकारस्यानुप्रवेशः स एकशब्दाभिधानसंकरः ।

तस्योदाहरणम् ।

**मैवमेवास्य सच्छायवर्णिकाचारुकर्णिका ।**
**अम्भोजिनीव चित्रस्था दृष्टिमात्रसुखप्रदा ॥ *१२ ॥**

अत्रोपमालंकार उपमाप्रतिभोत्पत्तिहेतुभूतश्च श्लेष इत्येतौ द्वावलंकारावेकस्मिन्वाक्यांशे इव शब्देऽनुप्रविष्टौ । तथाहि । अम्भोजिनी उपमानं गौरी उपमेया दृष्टिमात्रसुखप्रदत्वं साधारणो धर्मः इत्युपमा । सच्छायवर्णिकाचारुकर्णिकेति श्लेषः । अम्भोजिन्या हि वर्णा राजवर्तादयः गौर्यास्तु गौरत्वम् । अम्भोजिन्याः कर्णिका कमलमध्यवर्ती बीजकोशः गौर्यास्तु चारू कर्णौ । कप्चात्र समासान्तः । तेनायं श्लेषः । एतौ च द्वावलंकारावेकस्मिन्वाक्यांशे इव शब्देऽनुप्रविष्टौ । तेनायमेकशब्दाभिधानसंकरः ।

**अनुग्राह्यानुग्राहकसकरस्तु ।**

**परस्परोपकारेण यत्रालङ्कृतय स्थिता ।**
**स्वातन्त्र्येणात्मलाभ नो लभन्ते सोपि सकर ॥१३॥ (६४)**

यत्रोपकार्योपकारकभावावस्थितत्वादलकारा स्वातन्त्र्येणात्मान न लभन्ते सोनुग्राह्यानुग्राहकसकर । उपकार्योप्युपकारकमुपकरोति तदीयस्योपकारस्य विषयभावेनावस्थानात् । उपकार्ये ह्युपकारकाधेयमुपकार प्रतीप्सति सत्युपकारकस्योपकारकत्व भवति तेनोपकार्येणाप्युपकारकस्योपकार क्रियत इति परस्परग्रहणमत्रोपात्तम्—**परस्परोपकारेणेति** ।

तस्योदाहरणम् ।

**हरेणेव स्मरव्याधस्त्वयानङ्गीकृतोपि सन् ।**
**त्वद्वपुः क्षणमप्येष धाष्टर्यादिव न मुञ्चति ॥ *१३ ॥**

अत्र धाष्टर्यादिव न मुञ्चतीति यासावुत्प्रेक्षा सा हरेणेव स्मरव्याधस्त्वयानङ्गीकृतोपि सन्नित्युपमाप्रतिभोत्पत्तिहेतश्लेषवशेन स्वरूप प्रतिलभते । अनङ्गीकृतो हि अनङ्गत्वमशरीरत्वमापादित अनूरीकृतश्च । यश्चानूरीकृत क्षणमपि न मञ्चति तत्र धाष्ट्यं हेतुतयोत्प्रेक्षितु शक्यते । तेन श्लेषवशेनात्रोत्प्रेक्षा आसादितस्वभावा । अतोयमनुग्राह्यानुग्राहकसकर ।

एवमय चतुर्विध सकरो नानालकारगतविकल्प यवस्थासमुच्चयाङ्गाङ्गिभावसमाश्रयणेनाभिहित । तत्रानेकालकारविकल्पात्सदेहसकर । विभिन्नाधारत्वेन शब्दार्थवर्तिनोलकारयोरवस्थानाद्व्यवस्थासमाश्रय शब्दार्थवर्त्यलकारसकर । एकशब्दाभिधानसकरे तु समुच्चयेनानेकोलकार एकस्मिन्वाक्यांशे इवादावनुप्रविशति । अनुग्राह्यानुग्राहकसकरे त्वनकस्यालकारस्याङ्गाङ्गिभाव । अतो विकल्प—यवस्था—समुच्चया—ङ्गाङ्गिभावसश्रया एते चत्वार सकरभेदा ।

**उपमेयोपमा ।**

**अन्योन्यमेव यत्र स्यादुपमानोपमेयता ।**
**उपमेयोपमामाहुस्ता पक्षान्तरहानिगाम् ॥ १४ ॥ ( ६५ )**

यत्रोभयोरुपमानोपमेययो: परस्परमुपमानोपमेयभावस्तत्रोपमेयोपमा। उपमेयेनोपमानस्योपमानात् । ननु च प्राकरणिक साम्याभिधानसबन्धि उपमेयम् अप्राकरणिकमुपमानम् । यदि नात्रोपमेयस्योपमानत्वमभिधीयते एव सति तस्य प्राकरणिकत्व व्याहन्यते इत्याशङ्क्योक्तम्–**पक्षान्तरहानिगा**मिति । नात्रोपमानोपमेयभावे तात्पर्य किंतु एतदेव द्वयमेवविध विद्यते न त्वन्यदेतयो सदृश वस्त्वन्तर विद्यत इति । अतश्च एतत्पक्षद्वितयव्यतिरिक्तस्य पक्षान्तरस्यात्र हानेर्विवक्षितत्वात्परस्परमुपमानोपमेयभावो न दुष्यतीति । तस्य पक्षान्तरहानौ प्रतिपाद्यायामवान्तरवाक्यार्थत्वेनावस्थानात्-वर विष भक्षय मा चास्य गृहे भुक्त्वा–इतिवत् । अत्र हि विषभक्षण न विधीयते दुर्जनगृहे भोजनपरिवर्जनतात्पर्यात् । एवमिहाप्युपमानोपमेयभावस्याविवक्षा पक्षान्तरहानौ तात्पर्यात् ।

**शिरांसि पङ्कजानीव वेगोत्पातयतो द्विषाम् ।**
**आजौ करोपम चक्र यस्य चक्रोपमः करः ॥ *१४ ॥**

अत्र यस्येत्युपात्तस्य–**त्वत्कृते सोपि वैकुण्ठ** -इत्यत्र तच्छब्दसमन्वयेनाकाङ्क्षाविच्छेदो भविष्यति । उत्तरेष्वपि च श्लोकेषु तेनैव यच्छब्दार्थो निराकाङ्क्षीकार्यः । अत्र करचक्रयो परस्परमुपमानोपमेयभाव । साधारणश्चात्र धर्म अतित्वरितत्वेन शत्रुशिरोवकर्तनम् । एष चात्रोपमानोपमेयभाव उपमानान्तराभावे पर्यवसित । यदि परमेतयोरेव परस्परमुपमानोपमेयभाव स्यादन्यत्वे तयोरुपमान नास्तीति ।

**सहोक्ति** ।

**तुल्यकाले क्रिये यत्र वस्तुद्वयसमाश्रिते ।**
**पदेनैकेन कथ्येते सा सहोक्तिर्मता सताम् ॥ १५ ॥ (६६)**

यत्र वस्तुद्वयसमवेते द्वे क्रिये पदेनैकेन तन्त्रवृत्त्या कथ्येते तत्र सहोक्तिर्नामालकारो भवति । ननु–**सजहार शरत्काल**–इत्यादावपि दीपके पदेनैकेन वस्तुद्वयसमवेते द्वे क्रिये कथ्येते अतश्च तत्रापि सहोक्तित्व प्राप्नोतीत्याशङ्क्योक्तम्–**तुल्यकाले**-इति । यत्र सहादिना पदेन तुल्य

कालतामवगम्य वस्तु द्वितयसमाश्रिते द्वे क्रिये कथ्येते तत्र सहोक्तित्वम् । न चायं दीपकमिति नातिव्याप्तिः । सहादिना च शब्देन युगपत्कालतायामवद्योत्यमानायां द्वयी गतिः । कदाचित्खलु ययोः क्रिययोस्तुल्यकालता ते क्रिये तुल्यकक्षतया स्वाश्रयविश्रान्तत्वेनाभिधीयेते यथा देवदत्तयज्ञदत्तौ सह भुञ्जाते इति । कदाचित्त्वेकाश्रयविश्रान्तायाः क्रियाया मभिहितायां सहाद्यर्थपर्यालोचनासामर्थ्यादपरस्याश्रयस्य क्रियासंबन्धोऽवगम्यते यथा देवदत्तो यज्ञदत्तेन सह भुङ्क्ते इति । तत्रेह द्वितीया गतिराश्रीयते शाब्देन रूपेणैकत्र क्रियासंबन्धस्य प्रतीतस्यापरत्रार्थेन रूपेणोन्नीयमानत्वेन वक्रभणितेः सद्भावात् । एवंविधस्य यत्रैव शोभातिशयविधायित्वं तत्रैव सहोक्तेरलंकारता न सर्वत्रेति द्रष्टव्यम् ।

तस्या उदाहरणम् ।

भुजेन मन्युना सार्धं यस्याजौ तारकामये ।
चक्रे चक्राभिधानेन प्रैष्येणाप्तमनोरथः ॥ *१५ ॥

यस्य प्रैष्येणेति संबन्धः । अत्र मन्योर्भुजनस्य च मनोरथावाप्तिकरणलक्षणे द्वे क्रिये पदेनैकेनोक्ते चक्रेऽवाप्तमनोरथ इति । यद्यप्यवाप्तमनोरथ इति चक्र इति च समभिव्याहृतत्वभेदेन पदद्वित्वं तथापि क्रियापदद्वितयोपादानस्याविवक्षितत्वात्पदेनैकेनेति न विरुध्यते । अथवा चक्र इति करोतिक्रिया सामान्यभूता विशेषमन्तरेणापर्यवस्यन्ती मनोरथावाप्तिलक्षणं विशेषं गर्भीकरोति । अतश्चात्र सत्यप्यनेकपदत्वे एकपदीभाव इव प्रकाशते । तेन एकेन पदेनेत्युक्तम् । सार्धंशब्दश्चात्र तुल्यकालतामवद्योतयति । यस्य प्रैष्येणाज्ञाकारिणा चक्रसंज्ञकेन कर्तृभूतेन मृत्युना सार्धमपृथक्कालतया भुजेन आप्तमनोरथः कृत इति । अनेकलोककवलीकरणान्मृत्योर्मनोरथावाप्तिर्भुजनस्य च शत्रुविनाशात् ।

परिवृत्तिः ।

समन्यूनविशिष्टैस्तु कस्यचित्परिवर्तनम् ।
अर्थानर्थस्वभावं यत्परिवृत्तिरभाणि सा ॥ १६ ॥ ( ६७ )

कस्यचिद्वस्तुनो वस्त्वन्तरेण परिवर्तन परिवृत्ति । सा च त्रिविधा परिवर्तनकारकाणा परिवर्तनीयेन सह समत्वा न्यूनत्वादाधिकत्वाच्च । तदिदमुक्तम् **समन्यूनविशिष्टै**रिति । तत्र यस्या समोर्थ परिवर्त्यते तस्या अनर्थस्वभावता । अर्थशब्देन हि उपादेयोर्थोभिधीयते अर्थ्यतेसाविति कृत्वा । यत्र च साम्य तत्राथनीयत्व नास्ति । तेनार्थ्यत्वाभावानुगमात्तत्रानर्थत्वमभिधीयते । अतस्तत्रानर्थस्वभाव परिवर्तनम् । यत्रापि च निकृष्टपरिग्रहेणोत्कृष्टपरित्याग क्रियते तत्राप्यनर्थस्वभावता उपादेयविपरीतस्योपादानात् । अर्थप्रतिपक्षो ह्यत्रानर्थ । अधर्मानृतवत् । यथा ह्यधर्मानृतशब्दाभ्या नोत्तरपदार्थाभावमात्रमभिधीयते नाप्युत्तरपदार्थतुल्योर्थ किन्तर्ह्येतत्प्रतिपक्षस्यैवाभिधानम् । एतमिहाप्यनर्थश देन अर्थ प्रतिपक्षस्यैवाभिधानम् । यथा अनर्थो वैरिणामापतित इत्येवमादौ । तेन यत्रोत्कृष्टेन निकृष्ट परिगृह्यते तत्र दु खहेतुत्वादर्थप्रतिपक्षत्वेनानर्थस्वभावता । यत्र तु निकृष्टेनोत्कृष्ट परिगृह्यत तत्रोत्कृष्टस्य सुखहेतुत्वेनोपादेयत्वादर्थस्वभावता । तदिदमुक्तम् **अर्थानर्थस्वभाव**मिति ।

तत्र समपरिवृत्तेरुदाहरणम् ।

**उरो दत्वामरारीणा येन युद्धेष्वगृह्यत ।**
**हिरण्याक्षवधाद्येषु यशः साक जयश्रिया ॥ *१६ ॥**

अत्र उरोदानेनोत्साहो लक्ष्यते । यश्चात्र लक्ष्यमाणस्यार्थस्योत्साहस्योपायतया प्रतीयते अभिधेयोर्थो वक्षसो दान नाम यो हि यत्र वक्ष उद्यमयति स तत्रोत्सहत इति तत्प्रतिभावच्छादितस्योत्साहस्य प्रतीत । तदपेक्षया समेन समस्य परिवतनम् उरोयशसो समत्वात् ।

न्यूनपरिवृत्तेस्तूदाहरणम् ।

**नेत्रोरगवलभ्राम्यन्मन्दराद्रिशिरश्च्युतैः ।**
**रत्नैरापूर्य दुग्धाब्धि य समादत्त कौस्तुभम् ॥ *१७ ॥**

नेत्रभत उरगा वासुकि । अत्र कोस्तुभस्योत्कृष्टस्य निकृष्टरत्नपरित्यागेन ग्रहणान्निकृष्टेनोत्कृष्टस्य परिवर्तनम् ।

विशिष्टपरिवृत्तेस्तूदाहरणम् ।

**यो बलौ व्याप्तभूसीम्नि मखेन न्या जिगीपति ।**
**अभय स्वर्गसद्मभ्यो दत्वा जग्राह खर्वताम् ॥ *१८ ॥**

भूसीमा पृथि या अवधि । मखो यज्ञ । अत्र अभयेनोत्कृष्टेन निकृष्टस्य खर्वत्वस्य ह्रस्वत्वस्य परिवर्तनाम् अभिधेयापेक्षया पूर्वतरोदाहरणवत्प्रतिभाति । तात्पर्यार्थापेक्षया तु नेय परिवृत्ति । यत्तद्देवेभ्य अभय प्रातज्ञात तदुपायभूताया वामनवेषेण खर्वताया परिगृहीतत्वात् ॥

[ इति ] महाश्रीप्रतीहारे दुराजविरचितायामुद्भटालकारसारसग्रहलघुवृत्तौ पञ्चमो वग ॥



# षष्ठो वर्गः ।

अनन्वय ससदेह ससृष्टि भाविक तथा ।
काव्यदृष्टान्तहेतू चेत्यलकारान्परे विदु ॥ १ ॥ (६८)

अत्र इतिशब्दस्य वक्ष्यमाण यदनन्वयादिलक्षण तदुपक्षेपार्थत्वेन प्रयोगान्नानन्वयादिस्वरूपपरामर्शार्थत्वम् । इत्येव वक्ष्यमाणलक्षणकत्वेनानन्वयादीनलकारान्विदुरित्यर्थ । अतो वेदनक्रियाकर्मत्वादनन्वयमित्यादौ द्वितीया । काव्यदृष्टान्तहेतू चेत्यत्र दृष्टान्तहेतुशब्दाभ्या काव्यशब्द प्रत्येकमभिसबध्यते । दृष्टान्तशब्दस्य चात्र पूर्वनिपातोऽभ्यर्हितत्वात् । अभ्यर्हितत्व दृष्टान्तस्य दृष्टान्तप्रतिबिम्बितव्याप्तिमुखेन हेतो प्रायेण गमकतासप्रत्ययात् ।

ससदेह ।

उपमानेन तत्व च भेद च वदत पुन ।
ससदेह वच स्तुत्यै ससदेह विदुर्बुधा ॥ २ ॥ (६९)

उपमानाभेदपूर्व भेदमभिदधत कवे कविनिबद्धस्य वा वक्तुर्वच इति सबन्ध । सदेहोपेतवचनव्याजेन उपमानेन तत्व तद्भावमभेदमुपमेयस्याभिधायोत्तरकाल यदा तस्मादुपमानात्तस्योपमेयस्य भेदोऽभिधीयते तदा ससदेहोऽलकार । ननु उपमानेन सह पूर्वमभेदेऽभिहित सति पुनर्यदि तस्माद्भेदस्याभिधान क्रियते एव सति गजस्नान प्राप्नोतीत्याशङ्क्योक्त—स्तुत्यै इति । स्तुत्यर्थत्वेन एवविधा अभिधा समाश्रीयत इत्यर्थ ।

तस्योदाहरणम् ।

हस्ते किमस्य निःशेषदैत्यहृद्दलनोद्भवः ।
यश सचय एष स्यात्पिण्डीभावोस्य कि कृत. ॥ *१ ॥
नाभिपद्मस्पृहायातः किं हसो नष चञ्चलः ।
इति यस्याभितः शङ्कमशङ्किष्टार्जवो जनः ॥ *२ ॥

आर्जवो मूर्ख ऋजुत्वयोगात् । अत्र शङ्ख उपमेय यश सचयो हसश्चोपमानम् । तयोश्च पूवमभेद सदेहव्याजेनाभिहित किमेष यश - सचय स्यादिति तथा कि हस इति । पुनश्चात्रोपमानादुपमेयस्य भेदो । वणित । यश सचयात्तावद्भेदोपवर्णन पिण्डीभावोस्य कि कृत इति । यश सचय खलु प्रसरणशील । अस्य तु तद्विरुद्ध पिण्डीभावो दृश्यते। तन नाथ यश सचय इति । हसात्तु भेदाभिधान-नैष चञ्चल इति । हसस्य हि चञ्चलत्व नाम धर्म । इह च तन्नोपलभ्यते । तस्मान्नैष हस इति । एवविधस्य चात्राभिधानस्य फल स्तुति यश सचयो भगवता स्वहस्तवती कृत इति । तथासभाव्यमानहसागमन त्रिभुवनोत्पत्तिनिबन्धन यत्तन्नाभिनलिन तद्वान् भगवानिति ॥

**ससदेहस्य भेदान्तरमाह ।**

**अलकारान्तरच्छाया यत्कृत्वा धीषु बन्धनम् ।**
**असदेहेपि सदेहरूप सदेहनाम तत् ॥ ३ ॥ ( ७० )**

छाया शोभा । यत्र सदेहाभावेपि सदेहस्योपनिबन्धे सति न पूर्ववदुपमानादुपमेयस्य भेद उपनिबध्यते कि तर्ह्यभेद एव सशयच्छायया । तथाविधस्य चोपनिबन्धस्य फलमलकारान्तरोपजनिता सौन्दर्यप्रतिपत्ति । यदाह—**धीष्वलकारान्तरच्छाया कृत्वेति** । तत्रापि सदेहालकार ।

तस्योदाहरणम् ।

**नीलाब्दः किमय मेरौ धूमोथ प्रलयानले ।**
**इति यः शङ्क्यते श्यामः पक्षीन्द्रेर्कत्विषि स्थित ॥ *३ ॥**

अत्र मेरोरुपरिवर्ती नीलो बलाहक कल्पान्तवह्न्याश्रयश्च धूम इत्येतदुभयमुपमानम् । गरुडारूढस्तु भगवान् कृष्णवपुरुपमेय । तेन च उपमानद्वयेन सदेहव्याजेन भगवानापादिताभेद उपनिबद्ध किमयमेवविध अथैवविध इति । ताभ्या चोपमानाभ्यामुपमेयस्य पूर्ववद्भेदनिबन्धन नात्र किचिदभिहितम् । फल चैवमभिधानस्योपमालकारध्वनन । एवविधोपमानद्वितयसदृशो भगवान्वैनतेयारूढ इति ॥

**अनन्वय ।**

**यत्र तेनैव तस्य स्यादु १मानोपमेयता ।**
**असादृश्यविवक्षातस्तमित्याहुरनन्वयम् ॥ ४ ॥ ( ७१ )**

यत्र तेनैव न तु वस्त्वन्तरेण तस्यैव वस्त्वन्तरस्यापमानोपमयभावो भवेत्तत्र वस्त्व तरानुगमाभावादनन्वयाख्योलकार । ननु च सादृश्य सबन्धे सति प्राकरणिकमुपमेयमप्राकरणिक तूपमानमित्युपमानोपमेययो- र्लक्षितत्वात्कथमेकस्यैवोपमितिक्रियाया कर्मत्व करणत्व च सभवती त्याशङ्क्योक्तम्—**असादृश्यविवक्षात** इति । नात्रोपमानोपमेयभाव तात्पर्य किंतु उपमेयोपमावदुपमानान्तरव्यावृत्तावित्यर्थ । इतिशब्दोत्र वक्ष्यमाणोदाहरणोपक्षेपार्थत्वादनन्वयशब्देन नाभिसबध्यते तेन अन- न्वयमिति द्वितीया ।

तस्योदाहरणम् ।

**यस्य वाणी स्ववाणीव स्वक्रियेव क्रियामला ।**
**रूप स्वमिव रूप च लोकलोचनलोभनम् ॥ *४ ॥**

अत्र वाणीक्रियारूपाणा त्रयाणामनुपमतया लोकोत्तरत्व प्रतिपादयि- तुमात्मनैवोपमानोपमेयभावो निबद्ध ॥

**ससृष्टि ।**

**अलकृतीना बह्वीना द्वयार्वापि समाश्रय ।**
**एकत्र निरपेक्षाणा मिथ ससृष्टिरुच्यते ॥ ५ ॥ ( ७२ )**

बहूनामलकाराणा परस्परनिरपेक्षाणा द्वयोर्वा तथाविधयोरेकत्र शब्द- एव अर्थएव वा उपनिबन्धे सति ससृष्टिरलकार । यत्र तु परस्परसापेक्ष- त्व तत्र सदेहैकशब्दाभिधानानुग्राह्यानुग्राहकसकरास्त्रय पूर्वमभिहिता । यत्र च शब्दार्थलक्षणाश्रयद्वितयनिष्ठतयानेकालकारोपनिबन्धस्तत्रापि शब्दार्थवर्त्यनेकालकारसकर उक्त । एतद्वैलक्षण्येन तु ससृष्टि ।

तस्या उदाहरणम् ।

**त्वत्कृते सोपि वैकुण्ठः शशीवोपमि चन्द्रिकाम् ।**
**अर्घधारां सुधावृष्टि मन्ये त्यजति तां श्रियम् ॥ *५ ॥**

तदुत्तिष्ठातिधन्येन केनापि कमलेक्षणे ।
वरेण सह तारुण्य निर्विश ती गृहे वस ॥ *६ ॥

निर्विश ती उपभञ्जाना । अत्र शशी उषसि चन्द्रिकामिव वैकुण्ठस्त्वत्कृते श्रिय त्यजती युपमा । अधारा सुधावृष्टिमिति रूपकम् । तथाह्या लक्ष्म्या सवे पीयूषवृष्टे सबन्धिनो धमा वियन्ते केवल धारासब धो नास्तीत्युपमागतैकगणनिवृत्तिद्वारिका शिष्टोपमानगतसकलगुणाभ्यनुज्ञारूपा रूपणावगम्यते यथा अय पुरुप अकरो हस्तीति । तदेतस्मिञ्श्लोके उपमाया रूपकस्य च द्वयोरलकारयो ससृष्टि तयो केवलाभिधेयाश्रयत्वात्परस्परानिरपेक्षत्वाच्च । तदुत्तिष्ठेत्येतच्छ्लोकापेक्षया तु कमलेक्षणे इति समासोपमात्मकमुपमाभेदमाश्रित्य पूर्वोक्तालकारद्वयसकलनया बहूनामलकाराणा ससृष्ट्युदाहरणादिकप्रदर्शन द्रष्ट यम् ॥

भाविकम् ।

प्रत्यक्षा इव यत्रार्था दृश्यन्ते भूनभाविन ।
अत्यद्भुता स्यात्तद्वाचामनाकुल्येन भाविकम् ॥८॥ (७३)

साम्प्रतिकेन प्रध्वसाभावेनोपलक्ष्यमाणा पदार्था भूता यथा इदानयुधिष्ठिरादय । ये तु साम्प्रतिकेन प्रागभावेनोपलक्ष्यन्ते ते भाविन यथेदानी भगवदवतार कल्की विष्णुयशा । एवमनन्तरोपलक्षिता भूता भाविनश्च येर्थास्ते साम्प्रतिकप्रध्वसाभावप्रागभावविविक्ततया वर्तमानायमाना प्रत्यक्षा इव यत्र दृश्यन्ते तद्भाविक नामालकारो भवेत् । अत्र हेतर्वाचामनाकुलताथाना चात्यद्भुतत्वम् । तदुक्तम्—**वाचामनाकुल्येनेति अत्यद्भुता** इति च । तत्र वाचामनाकुलता व्यस्तसबन्धरहितलोकप्रसिद्धश दापनिबन्धात् झगित्यर्थप्रतीतिकारिता । तस्या हि सत्या कवे सबन्धी यो भाव आशय शृङ्गारादिरससवलितचतुर्वर्गोपायभूतविशिष्टार्थोल्लेखी स कविनेव सहृदयै श्रोतृभि स्वाभिप्रायाभेदेन तत्तत्का यप्रतिबिम्बितरूपतया साक्षात्क्रियते । श्रोतृणामपि हि तथाविधस्वच्छश दानुभवद्रावितान्तरात्मना सहृदयाना स्वाभिप्रायप्रतिमुद्रा तत्र सक्रामति । अत

कवेर्योसावभिप्रायस्तद्गोचरीकृता भूता भाविनोपि पदार्थास्तत्र सहृदयै श्रोतृभि स्वाभिप्रायाभेदेन प्रत्यक्षा इव दृश्यन्ते । यथा चात्र श दगतम नाकलत्वमन तरोक्तेन प्रकारेण हेतुस्तथार्थगतमपि चित्रोदात्ताथोपनिब न्ध- हेतुकमत्यद्भुतत्व द्रष्टव्यम् । तदुक्त भाविकमुपक्रम्य **भामहेन—**

चित्रोदात्ताद्भुतार्थत्व कथाया स्वभिनीतता ।
शब्दानाकुलता चेति तस्य हेतन्प्रचक्षते ॥ इति ।

स्वभिनीततेत्यभिनयादिद्वारेण शृङ्गारादिरससवलितत्व चतुवर्गोपाय- स्योक्तम् । तदेवमेवविधहेतुनिबन्धन कविश्रोतृभावद्वितयसमीलनात्मक भाविक द्रष्ट यम् । अत एव चात्र कविसबन्धिनो भावस्य श्रोतभावाभेदा ध्यवसितस्य पुर स्फुरद्रूपस्य विद्यमानत्वाद्भाविकव्यपदेश । भावोस्मि- विद्यते इति भाविकम् । तदाहु —

रसोल्लासी कवेरात्मा स्वच्छे श दार्थदर्पणे ।
मानुयोजोयतप्रौढे प्रतिबि य प्रकाशते ॥
सपीतस्वच्छश दार्थद्राविताभ्य तरस्तत ।
श्रोता तत्साम्यत पुष्टि चतुर्वर्गे परा व्रजेत् ॥ इति ।

स्वच्छ इति प्रसादगुणोभिहित । प्रौढ इति तु सालकारता । सपीतौ सम्यगास्वादितौ । तत्साम्यत इति स्वाभिप्रायाभेदेन कविगतस्याभिप्राय- स्याध्यवसानादित्यर्थ ।

तस्योदाहरणम् ।

२　**करोषि पीडां प्रीति च निरञ्जनविलोचना ।**
**मूर्त्यानया समुद्वीक्ष्यनानाभरणशोभया ॥ ७७ ॥**

अत्राभरणोचितमूर्तित्वेपि निरञ्जनविलोचनत्वोपलक्षितादाभरण त्यागात्पीडा । सहजसौन्दर्यनिर्भरत्वेन तु आभरणसपाद्याया शोभाया परिदृश्यमानत्वात्प्रीति । तेनात्र साम्प्रतिकप्रध्वसाभावोपलक्षितत्वाद्भू- षणसबन्धो व्यतीतोप्यत्यद्भुतो योसौ वपु प्रकर्षस्तद्वशेन प्रत्यक्ष इव कविनोपनिबद्ध । तथैव चासौ सहृदयाना चमत्कारमातनोति । सतत मुत्कृष्टतया वैचित्र्येण ईक्षणीयाभरणशोभा यस्यामिति बहुव्रीहि ॥

काव्यहेतु ।

**श्रुतमेक यदन्यत्र स्मृतेरनुभवस्य वा ।**
**हेतुता प्रतिपद्येत काव्यलिङ्ग तदुच्यते ॥ ७ ॥ ( ७४ )**

यत्र एक वस्त श्रुत सद्वस्त्वन्तर स्मारयति अनुभावयति वा तत्र का्यलिङ्ग नामालकार । पक्षधमत्वा्वय यतिरेकानुसरणगभतया यथा तार्किकप्रसिद्धा हेतवो लोकप्रसिद्धवस्तुविषयत्वेनोपनिबध्यमाना वैरस्य-मावहन्ति न तथा का्यहेतु अतिशयेन सवेषा जनाना योसौ हृदय-सवादी सरस पदार्थस्तन्निष्ठतया उपनिबध्यमानत्वात् । अत काव्य-लिङ्गमिति का०गग्रहणमुपात्तम् । न खलु त्छास्त्रलिङ्ग कि तर्हि काव्य लिङ्गमिति काव्यग्रहणेन प्रतिपाद्यते ।

ननु काव्यग्रहणेन कथ काव्यस्य सरसपदार्थनिष्ठतोपदर्श्यते । काव्यस्य सरसत्वात् । काव्य खलु गुणसस्कृतश्दार्थशरीरत्वात्सरसमेव भवति न तु नीरसम् । तथा हि । गुणा काव्यस्य माधुर्यौज प्रसाद-लक्षणा । तत्र माधुर्यमाह्लादकत्वम् ओजो गाढता प्रसादस्त्वव्यवधानेन रसाभि यक्त्यनुगुणता । तदेतेषा त्रयाणा गुणानां मध्यात्प्रसादस्य प्राधा-यम् । माधुर्यौजसोस्तु तत्तद्रसाभिव्यक्त्यानुगुण्येन तारतम्येनावस्थितयो प्रसाद एव सोपयोगता । एव च तत्र तद्रसानुगुण्येन माधुर्यौजोभ्या तारतम्येनावस्थिताभ्या उपकृतो योसौ प्रसादात्मा रसानामव्यवधानेन प्रतीतिहेतुगुणस्तदुपेतश्दार्थशरीरत्वेन का यस्यावस्थानात्सरसतैव भवति न तु नीरसता ।

यद्येवमिदानी गुणैरेव कृतकृत्यत्वात्काव्यस्यालकाराणा तत्र निरु पयोगता प्राप्नोति । नैवम् । गुणाहितशोभे का्ये अलकाराणा शोभा तिशयविधायित्वाल्लौकिकालकारवत् । यथा हि लौकिकानामलकाराणा गुणसस्कृते युवति वपुषि निबध्यमानानामलकारता एव का्यालकाराणा-मपि द्रष्टव्यम् । ननु निर्गुणेपि काव्ये अलकाराणा गुणवच्छोभाविधा-यित्व कस्मान्नेष्यते । अपरिदृष्टत्वात् । न खलु निर्गुणे का्ये निबध्य

मानानामलकाराणा जरद्योषिदलकारवच्छाभाविधायित्व दृश्यते । तथा हि । जरद्योषित्यलकारा निबध्यमाना न तस्या शोभा कुर्वन्ति प्रत्युत तस्या निबध्यमानाना तेषामात्मीयमेव सौभाग्य हीयते । तथा काव्यालकाराणामपि निर्गुणे काव्ये निबध्यमानाना काव्यशोभाहेतुत्वाभाव स्वशोभाहानिश्च भवति । यदवोचद्भट्टवामन.—

युवतेरिव रूपमङ्गकाव्य स्वदते शुद्धगुण तदप्यतीव ।
विहितप्रणय निरन्तराभि सदलकारविकल्पकल्पनाभि ॥
यदि भवति वचश्च्युत गुणेभ्यो वपुरिव यौवनवन्ध्यमङ्गनाया ।
अपि जनदयितानि दुर्भगत्व नियतमलकरणानि सश्रयन्ते ॥ इति ।

अङ्गशब्द इष्टामन्त्रणे । शुद्धगुणत्वात्स्वदमान सदलकारविकल्पकल्पनाभिर्विहितपरिचयमतिशयेन स्वदत इति सबन्ध । अत एवालकाराणामनित्यता । गुणरहित हि काव्यमकाव्यमेव भवति नत्वलकाररहितम् । अलकाराणा गुणोपजनितशोभे काव्ये शोभातिशयविधायित्वात् । तदुक्तम्—काव्यशोभाया कर्तारो धर्मा गुणास्तदतिशयहेतवस्त्वलकारा पूर्वे नित्या इति । पूर्वे इति गुणा इत्यर्थ ।

लक्ष्ये च अलकाररहितमपि केवलगुणसस्क्रियमाणशब्दार्थशरीर काव्य दृश्यते । यथा **अमरुकस्य** कवेरानिबद्धशृङ्गाररसस्य द्वौ श्लोक —

कथमपि कृतप्रत्यापत्तौ प्रिये स्खलितोत्तरे
विरहकृशया कृत्वा व्याजप्रकल्पितमश्रुतम् ।
असहनसखीश्रोत्रप्राप्तिप्रमादससभ्रमम्
विवलितदृशा शून्ये गेहे समुच्छ्वसित तत ॥ इति ।

न खल्वत्रार्थालकार कश्चित्परिदृश्यते । अथ माधुर्यौजोभ्या परिबृहितस्य प्रसादस्य विद्यमानत्वात्काव्यरूपता । ननु चात्रापि ईर्ष्याविप्रलम्भविरहविप्रलम्भशृङ्गाराभ्या स्वतिरोधानेनोपकृत सभोगशृङ्गारो नायिकानिष्ठो निबद्धस्तद्योगाच्च रसवत्त्वमल भविष्यति । तथाहि । कथमपि कृतप्रत्यापत्तौ प्रिये इत्यत्रभागे विरहविप्रलम्भपूर्वक प्रियतमचित्तसाम्मु-

स्यात्मा सभोगशृङ्गार सूचित । स्खलितोत्तर इति तु सजातगोत्रस्खलितत्वात्प्रयसो नायिकाया इर्ष्याविप्रलम्भशृङ्गारो निबद्ध । पुनश्च विरहक्रायेत्यादिभिस्त्रिभि पादैर।हि थेन भावेन नायिकाधारमीर्ष्याविप्रलम्भशृङ्गार प्रच्छाद्य सभोगशृङ्गारेण चित्ताश्वाससूचितेन वाक्यार्थसमाप्ति कृता । तथाहि । विरहक्रायेत्यादिना पादेन नायिकागतो मन्युरवच्छाद्योपदर्शित । असहनसखीत्यादिना तु गोत्रस्खलितस्य सखीश्रोत्रप्राप्ति विरहविप्रलम्भकारणत्वेनाशङ्क्य दृष्टिपरावृत्त्या सखीजनशून्ये गृहे परिदृष्टे यत्तन्नायिकया समुच्छ्वसित तदपनीताधात्सम्भोगशृङ्गारेण वाक्यार्थो निर्वाहित । तदेवमत्र सभोगस्य विप्रलम्भबाधेन लब्धपदबन्धस्योपनिबन्धाद्रसवन्नामलङ्कार । तत्कथमत्र निरलङ्कारतोक्ता । उच्यते । न खलु काव्यस्य रसाना चालङ्कार्यालङ्कारभाव किं त्वात्मशरीरभाव । रसा हि काव्यस्यात्मत्वेनावस्थिता शब्दार्था न शरीररूपतया । यथा ह्यात्माधिष्ठित शरीर जीवतीति व्यपदिश्यते तथा रसाधिष्ठितस्य काव्यस्य जीवद्रूपतया व्यपदेश क्रियते तस्माद्रसाना काव्यशरीरभूतशब्दार्थविषयतयात्मत्वेनावस्थान नत्वलङ्कारतया । रसाभिव्यक्तिश्च यथायोग माधुर्योजोभ्या तारतम्येनावस्थिताभ्यामपबृंहितो यासौ प्रसादात्मा गुणस्तेन क्रियते । अतोऽत्र विप्रलम्भशृङ्गारोपकृतस्य सभोगशृङ्गारस्य सगुणकाव्यात्मत्वेनावस्थान न तु काव्य प्रति अलङ्कारतयेति युक्तमिदमुक्त—**निरलङ्कारमपि काव्य सगुण दृश्यते** इति । एव रसान्तरेषु भावेषु रसभावाभासेषु तत्प्रशमेषु च वाच्यम् । तदाह —

रसाद्यधिष्ठित काव्य जीवद्रूपतया यत ।
कथ्यते तद्रसादीना काव्यात्मत्व व्यवस्थितम् ॥ इति ।

यत्तु रसादीना पूर्वमलङ्कारत्वमुक्त तदेवविधभेदाविवक्षया ।

तदेव गुणसंस्कृतशब्दार्थशरीरत्वात्सरसमेव काव्यम् । यथैव गुणशून्यत्वान्नीरसे व्याकरणादौ भरतादौ च काव्यव्यपदेशो न प्राप्त । ततश्च

वृत्तदेवादिचरितशंसि चोत्पाद्यवस्तु च ।
कलाशास्त्राश्रय चेति चतुर्धा भिद्यते पुन ॥

इति **भामहोदित** विरुध्यते । अत्र हि कलाश्रयशब्देन **भारता**द्यभिहित शास्त्राश्रयश देन च व्याकरणादि । अतो वक्त यमेतत्कथ तत्र का य यपदेश इति । उच्यते । मुख्यया तावद्वृत्त्या गुणसस्कृतश दार्थशरीरमेव काव्यम् । गुणरहितशब्दार्थशरीर तु का यमात्रे का यश दस्य का यसादृश्यादुपचारात्प्रयोगो भविष्यति । उक्त च **काव्यशब्दोय गुणालकारसस्कृतयो' शब्दार्थयोर्वर्तते भक्त्या तु शब्दार्थमात्रवचनोत्र गृह्यते**—इति । भक्त्येत्युपचारेणेत्यर्थ । तदेवगुणसस्कृतशब्दार्थशरीरत्वाकाव्यस्य सरसत्वमिति । तद्विशिष्ट का यलिङ्ग सरसपदार्थनिष्ठमेव भवति न तु नीरसवस्तुमात्रनिष्ठ शास्त्रलिङ्गवदित्युपपन्नम् ।

ताकिकाणा च हेतुव्यापारे द्वैविध्यम् । केचित्खलु ताकिका याप्तिग्रहणकाले यदनुभूत व्यापक वह्न्यादि वस्तु धूमादे र्याप्यस्य तत्स्मरणमात्रे धूमादिहेतुदर्शनप्रबुद्धसस्काराणा पुरुषाणा हेतुव्यापार मन्य ते । अपरे तु वह्न्यादीना पर्वतादिधर्मविशेषसबन्धस्य पूर्वमगृहीतस्य धूमादिहेतुव्यापारसामर्थ्येन इदानीमेव अवसेयत्वालिङ्गसामर्थ्याल्लिङ्ग्यनुभवस्यैवोत्पत्तिमाहु । तदिदमुक्तम्—**स्मृतेरनुभवस्य**वेति ।

तस्योदाहरणम् ।

**छायेय तव शेषाङ्गकान्तेः किञ्चिदनुज्ज्वला ।**
**विभूषाघटनादेशान् दर्शयन्ती दुनोति माम् ॥ *८ ॥**

अत्र विभूषणविन्यासास्पदभूता ये कण्ठादयस्तदत्र शिष्टानामङ्गाना यासौ कान्ति दीप्ति तस्या अनुज्ज्वला मलिना यासौ छाया शोभा सा लिङ्गम् । तत्सामर्थ्याच्च भूषाविन्यासप्रदेशाना भूषणसबन्धोतीतोनुमीयते । तेन तत्काव्यलिङ्गम् ।

**काव्यदृष्टान्त** ।

**इष्टस्यार्थस्य विस्पष्टप्रतिबिम्बनिदर्शनम् ।**
**यथेवादिपदै शून्य बुधैर्दृष्टान्त उच्यते ॥ ८ ॥ ( ७५ )**

इष्टस्य प्राकरणिकतया प्रतिपादयितुमभिमतस्यार्थस्य यत्र विस्पष्टतया प्रतिबिम्बसदृश वस्तु निदर्श्यते तत्र काव्यदृष्टान्तो नामालकार । ननु

कोपादेकतलाघातनिपतन्मत्तदन्तिन ।
हरेर्हरिणयुद्धेषु कियान्व्याक्षेपविस्तर ॥

इत्येवमादावपि अप्रस्तुतप्रशसायामिष्टाप्रतिबिम्बानिदर्शन विद्यते । तथाहि । अत्र रामदेवस्य मारीचवधे व्यापारो निरायासो हरिणहननोद्योगिकेसरिकिशोरप्रतिबिम्बितत्वेन निदर्शित । अतोत्रापि दृष्टान्तता प्रसङ्ग । नैतत् । यत एतदर्थमेव विस्पष्टग्रहणमुपात्तम् । अत्र हि प्रतिबिम्बादेव बिम्बस्योन्नयनाद्विस्पष्टरूपतया इष्टस्यार्थस्य प्रतिबिम्बनिदर्शन नास्ति । यत्र तु इष्टमर्थं स्वकण्ठेनोपादाय तस्य प्रतिबिम्बमुपदर्श्यते तत्र दृष्टान्तत्वम् । अतो नाति व्याप्ति । उपमाद्यापयेवविधस्य रूपस्य सभव इति तन्निराकरणार्थमुक्तम्—**यथेवादिपदै शून्यमिति** । आदिग्रहणेनात्र साधारणधर्मस्यापि परिग्रह ।

तस्योदाहरणम ॥

**किंचात्र बहुनोक्तेन व्रज भर्तारमाप्नुहि ।**
**उदन्वन्तमनासाद्य महानद्यः किमासते ॥ *९ ॥**

अत्र भगवतीकर्तृकाया वरप्राप्तेर्महानदीकर्तृका उदन्वत्प्राप्तिर्विस्पष्टतया प्रतिबिम्बत्वेनोपनिबद्धा । अतो दृष्टान्त ॥

एवमेते अष्टक-षट्क-त्रिक-सप्तकैकादशक षट्कै षड्भिर्वर्गैरेकचत्वारिंशदलकारा प्रतिपादिता ।

ननु यत्र काव्ये सहृदयहृदयाह्लादिन प्रधानभूतस्य स्वशब्दव्यापारास्पृष्टत्वेन प्रतीयमानैकरूपस्यार्थस्य सद्भावस्तत्र तथाविधार्थाभिव्यक्तिहेतु काव्यजीवितभूत कैश्चित्सहृदयैर्ध्वनिर्नाम व्यञ्जकत्वभेदात्मा काव्यधर्मोऽभिहित स कस्मादिह नोपदिष्ट । उच्यते । एष्वेवालकारेष्वन्तर्भावात् । तथाहि । प्रतीयमानैकरूपस्य वस्तुनस्त्रैविध्य तैरुक्त वस्तुमात्रालकाररसादिभेदेन । तत्र वस्तुमात्र तावत्प्रतीयते । यथा—

चक्राभिघातप्रसभाज्ञयैव चकार यो राहुवधूजनस्य ।
आलिङ्गनोद्दामविलासवन्ध्य रतोत्सव चुम्बनमात्रशेषम् ॥ इति ।

अत्र हि राहुवधूरतोत्सवस्य या चुम्बनमात्रशेषता तत्कर्मिका चक्राभिघातप्रसभाज्ञाकरणिका चकारेतिकरणलक्षणा क्रियाभिधीयते । स चैवविधा कार्यभूतत्वात्कारणमन्तरेणानुपपद्यमाना तथाविधवैरस्यकारि राहुशिरश्छेदलक्षण कारण नालकाररूप नापि रसादिरूपम् अपि तु वस्तुमात्ररूप कल्पयति । अतोत्र वस्तुमात्रस्यैवविधस्य शब्दव्यापारास्पृष्टस्य प्रतीयमानता । तद्विषयस्य च काव्यधर्मस्य ध्वननाभिधानस्य वाच्यवाचकव्यापारशून्यावगमनस्वभावत्वात्पर्यायोक्तालकारसस्पर्शित्वम्। तदुक्तम्—**पर्यायोक्त यदन्येने**त्यादि ।

ननु पर्यायोक्तशब्देन प्रकारान्तरेण उच्यमानत्वात्प्रतीयमान वस्तु अभिधीयते । तच्चेह प्रतीयमान प्रधानत्वादलकार्यतया वक्तु युक्त नत्वलकृतिकारणतया । अत कथ तस्यालकारव्यपदेश । उच्यते । प्रधानमपि गुणाना सौन्दर्यहेतुत्वादलकृतौ साधनत्व भजति । दृश्यते हि लोके व्यपदेश स्वाम्यलकरणका भृत्या इति । अतोत्रापि प्रतीयमानस्य सत्यपि प्रधानत्वे स्वगुणभूतवाच्यसौन्दर्यसाधकतमत्वादलकारव्यपदेशो न विरुध्यते । यदि वा भगवद्वासुदेववर्तितया योसौ वीररसोवगम्यते तदपेक्षया तस्य मुख्ययैव वृत्त्या गुणभूतत्वादलकारता । एवमुत्तरत्रापि यथासभव योज्यम् ।

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाता शीकरिण पयोदसुहृदामानन्दकेका कला ।
काम सन्तु दृढ कठोरहृदयो रामोस्मि सर्व सहे
वैदेही तु कथ भविष्यति ह हा हा देवि धीरा भव ॥

इत्येवमादावपि रामादीना शब्दाना असाधारणरूपतया राज्यभ्रशवनवाससीताहरणपितृमरणादयो दुःखैकहेतव स्वार्थसहचारिणो वस्तुमात्ररूपा व्यङ्ग्यधर्मास्तत्परिणतरूपतया स्वार्थस्य प्रतीतिस्तद्धेतुभूतत्वात्प-

र्यायोक्तालकारसस्पर्शितैव । न खलु पदे पर्यायोक्तेन न भावितव्यमितीय राज्ञामाज्ञा सूत्रकारवचन वा । लक्षणयोगाद्विभक्तरूपतावस्थाप्यते । अत्र च पर्यायोक्तलक्षण विद्यते वाच्यवाचकव्यापारशून्यस्यावगमनात्मन प्रकारस्य सद्भावात् । तेन कथ पर्यायोक्तता न स्यात् ।

एवमन्यत्रापि वस्तुमात्रे प्रतीयमाने पर्यायोक्तता वाच्या । तस्मान्न वस्तुमात्रे प्रतीयमाने तदभिव्यक्तिहेतु काव्यवमो ध्वनिर्नामार्थान्तरम् ।

अलकाराणा तु यथापि—

लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्
स्मेरेऽधुना तव मुखे तरलायताक्षि ।
क्षोभ यदेति न मनागपि तेन मन्ये
सुव्यक्तमेव जलराशिरय पयोधि ॥

इत्यादौ प्रतीयमानैकरूपता तथाप्यनन्तरोक्तलक्षणेष्वलकारेषु अनुप्रवेशो भविष्यति पर्यायोक्ते वा । तथाह्यत्र श्लोके मुखस्य लावण्यकान्तिपरिपूरितदिङ्मुखस्य विकसितहासज्योत्स्नस्य सबोधनसामर्थ्यावसिततरलायताक्षित्वस्य च सन्निधानाज्जलनिधे क्षोभमुपपत्तिमत्त्वेन सभाव्य तदभावो जाड्यसमूहावच्छादितस्वभावत्वादभिहित । तथाविधार्थपर्यालोचनया चात्र मुखस्य चन्द्रेण रूपणा प्रतीयते चन्द्रसन्निधानाज्जलनिधे क्षोभस्योत्पाददर्शनात् । न च अस्यालकारस्य प्रतीयमानरूपता तस्येहालकारत्व केनचिन्निवारितामिति प्रतीयमानरूपतया रूपकाख्योलकारो भविष्यति । अथवा पर्यायोक्त्या रूपकस्यात्रावसितत्वात्पर्यायोक्तमलकार ।

सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रय ।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥

इत्यादौ तु शूरादिभि सह सुवर्णपुष्पपृथिवीकर्मकस्य चयनस्यानुपपद्यमानान्वयत्वात्सादृश्यस्याज येनोपमेयभूतस्य बहुलाभत्वस्य तत्सदृश

स्य या लक्षणा तद्द्वारेण गभीकृतोपमानोपमेयभावा असभवद्वाच्यार्थो विदर्शना द्रष्टव्या । यदुक्तम्—**अभवन्वस्तुसबन्ध** इत्यादि । **भट्ट-वामनेन** चात्र वक्रोक्ति यवहार प्रवर्तित यदवोचत्—साहश्यात्लक्षणा वक्रोक्तिरिति ।

सर्वैकशरणमक्षयमधीशमीश धिया हरि कृष्णम् ।
चतुरात्मान निष्क्रियमरिमथन नमत चक्रधरम् ॥

इत्यादावपि श्लेष । तथाह्यत्र सर्वैकशरणमक्षयमित्यादीना श दाना मथभेदेन भिन्नत्वे सति यथायोगमेकप्रयत्नोच्चार्याणामेकप्रयत्नोच्चार्य-श दसदृशानां वोच्चारणम् । अतो विरोधालकारप्रतिभोत्पत्तिहेतुरत्र श्लेष । यदुक्तम्—**एकप्रयत्नोच्चार्याणा**मित्यादि ।

एवमलकारान्तरेष्वपि प्रतीयमानेषु वाच्यम् । तेनालकारनिष्ठस्यापि अभि यञ्जकत्वस्योक्तेष्वलकारेष्वन्तर्भावाद याप्त्यभाव ॥

रसभावतदाभासतत्प्रशमाना तु प्रतीयमानतायामुदाहरणम् ।

याते गोत्रविपर्यये श्रुतिपथ शय्यामनुप्राप्तया
निध्यति परिवर्तन पुनरपि प्रारब्धुमङ्गीकृतम् ।
भूयस्तत्प्रकृत कृत च शिथिलक्षिप्तैकदोर्लेखया
तन्वङ्ग्या न तु पारित स्तनभर क्रष्टु प्रियस्योरस ॥

तथाह्यत्र गोत्रस्खलितस्य श्रुतिपथप्राप्तेरीर्ष्याविप्रलम्भशृङ्गारो नायिकाया समुखीभूतोपि सभोगशृङ्गारेण स्वहेतुसामग्र्यप्रातिल धप्रकर्षेण तिरोधाय प्रदर्शित । निध्यति परिवर्तनमित्यादिना हि यथाक्रममीर्ष्याविप्रलम्भशृङ्गारानुभावस्य परिवर्तनस्य दर्शनप्रार्थनाध्यवसायानुष्ठानात्मिकाश्चतस्रोवस्था सभोगशृङ्गारमन्थरीकृतस्वस्वभावत्वेनोपवर्णिता । पुनश्च सभोगशृङ्गारेण वाक्यार्थो निर्वाहितो-न तु पारित-इत्यादिना । अतोत्र सभोगशृङ्गारस्येर्ष्याविप्रलम्भशृङ्गारतिरोधानहेतो प्रतीयमानता । तत्र च पूर्व रसवत्वलक्षणोलकार प्रतिपादितो—**रसवद्दर्शिते**त्यादिना । एव रसान्तरेष्वपि वाच्यम् ॥

यत्रापि भावास्तथा रसभावाभासा रसभावतदाभासप्रशमाश्च प्रतीयमानास्तत्रापि यथाक्रम प्रेयस्वदूर्जस्वित्समाहितलक्षणालकारयोगो वाच्य । एवमेतत्प्रधानभूतेषु रसादिषूक्तम् ।

गुणभूतेष्वपि च रसेषूदात्तालकार प्रतिपादित **चरित च महात्मनाम्**इत्यादिना । अतश्च रसादिष्वभि यञ्जकत्वस्य नार्थान्तरता ।

एव च त्रिविधेपि प्रतीयमानेर्थे गच्छ दाना यञ्जकत्वमनन्तरोपवर्णितेषूदाहरणेषु षट्प्रकारतयोपदर्शित तस्योक्तेष्वेवालकारेष्वन्तभावात् व्याप्ति । षट्प्रकारता चात्र त्रिविधप्रतीयमानार्थनिष्ठस्यापि व्यञ्जकत्वस्य वाच्यस्य विवक्षितत्वाविवक्षितत्वाभ्यामुक्ता । तथा हि । द्विविध व्यञ्जकत्व वाचकशक्त्याश्रय वाच्यशक्त्याश्रय च । तत्र वाचकशक्त्याश्रयमलकाराणामेव यङ्ग्यत्वात् एकप्रकारम् । तत्र ह्यलकारा एव व्यज्यन्ते न तु वस्तुमात्र नापि रसादय । यदुक्तम्—

आक्षिप्त एवालकार श दशक्त्या प्रकाशते ।
अस्मिन्ननुक्त शब्देन श दशक्त्युद्भवो हि स ॥ इति ।

वाच्यशक्त्याश्रय तु रसादिवस्तुमात्रालकाराभि यक्तिहेतुत्वात् त्रिविधम् ।

तत्र यत्तावद्वाचकशक्त्याश्रय व्यङ्ग्यभूतालकारैकनियत श दशक्तिमूलानुरणनरूप यङ्ग्यतया सहृदयै र्यञ्जकत्वमुक्तम्—**सर्वैकशरणमक्षयम्**इत्यादौ तत्र श दशक्त्या ये प्रतीयन्ते विरोधादयोलकारास्तत्संस्कृतस्वभाव वाच्यमवगम्यते । अतस्तत्र वाच्यस्य विवक्षैव । यत्तु वाच्यशक्त्याश्रयम्—**या ते गोत्रविपर्यये श्रुतिपथम्**इत्यादावसॅलक्ष्यक्रमरसादि यङ्ग्यनिष्ठ व्यञ्जकत्वमुक्त तत्रापि वाच्यस्य विवक्षितत्वमेव वाच्यभूतानुभावादिविवक्षयैव व्यङ्ग्यरसादिप्रतीतेरुत्पादात् । तदेव वाचकशक्त्याश्रय यङ्ग्यभूतालकारैकनियते वाच्यशक्त्याश्रये चासॅलक्ष्यक्रमरसादि यङ्ग्यनिष्ठे यञ्जकत्वे वाच्यस्य विवक्षितत्वमेव ।

वस्तुमात्रालकारविषयस्य तु वाच्यशक्त्याश्रयस्य यञ्जकत्वस्य प्रत्येक वाच्यस्य विवक्षितत्वाविवक्षितत्वाभ्या द्वैविध्यम् । तथा हि ।

**चक्राभिघातप्रसभाज्ञये**त्यादौ वस्तुविषये यञ्जकत्वे वाच्यस्य विवक्षितत्व कार्यविवक्षापूवकत्वेन कारणप्रतीतिप्रसवात् । **स्निग्धश्यामल कान्ती**त्यादौ तु रामादिश दानामर्था तरसक्रमितवाच्याना वाच्यमविवक्षित यङ्ग्यधर्मान्तरपरिणतत्वात् । एव वस्तुमात्रविषये यञ्जकत्वे वाच्यस्य विविक्षाविवक्षे ।

अलकारविषयेपि वाच्यशक्त्याश्रये यञ्जकत्वे–**लावण्यकान्ती**त्यादौ एकस्मिन् **मन्ये** इत्येतस्मिञ्श दे यो विरोषाक्त्युत्प्रेक्षयोरनुप्रवेशस्तद्वशेन समासादितस्वभावो योसावेकश दाभिधानसकरस्तत्प्रतिभोत्पत्तिहेतश्लेषप्रौढीकृत वाच्य विवक्षित तन्मूलक वेन रूपकप्रतीतिरुत्पादात् । **सुवर्णपुष्पा पृथिवी**मित्यादौ तु वाच्यस्याविवक्षा उपमेयस्य बहुलाभत्वस्य तत्सदृशस्य या लक्षणा तस्या अत्य तातिरस्कृतवाच्यमूलत्वात् । यदि त्वत्र–**न तिङन्तेनोपमानमस्ती**ति दृष्टया तद्भावाध्यवसानात्सुवर्णपुष्पपृथिवीचयनलक्षणोपमानावच्छादितरूपत्वेन शूरादिविषयस्य बहुलाभत्वस्योपमेयस्य प्रौढोक्त्या प्रतिपत्ति । ततोत्र प्रौढोक्तिमात्रानिष्पन्नशरीरस्य वाच्यस्याथस्य प्राधान्यात्–**भेदेनन्यत्वमि**त्येवमात्मकतयोपवर्णितमातिशयोक्तिभेदत्व वाच्यम् । यङ्ग्या ह्युपमा तदानीमत्र गणीभवति । एवमलकारनिष्ठस्यापि यञ्जकत्वस्य वाच्यविवक्षितत्वाविवक्षितत्वाभ्या द्वैविध्यम् ।

यत्र चाविवक्षा वाच्यस्य वस्तुनिष्ठे अलकारनिष्ठे वा यञ्जकत्वे तत्र यङ्ग्यरसादेर्झगित्यवगम्यमानत्वादसॅलक्ष्यक्रमता द्रष्ट या । यदुक्त **भट्टवामनेन–लक्षणायां हि झगित्यर्थप्रतिपत्तिक्षमत्व रहस्यमाचक्षते**–इति । अत एव च सहृदयैयत्र वाच्यस्य विवक्षितत्व तत्रैव वस्त्वलकारयो प्रतीयमानयोर्वाच्येन सह क्रम यवहार प्रवर्तितोर्थशक्तिमूलानुरणनरूप यङ्ग्यो ध्वनिरित्युक्त न तु वाच्याविवक्षायामपि । यत्र च वाच्यस्याविवक्षा पूर्वमुक्ता **रामोस्मीति–सुवर्णपुष्पामि**ति च तत्र वय अधिकारोपेतप्रस्तुतार्थानुबाधिवस्तूपनिबन्धादप्रस्तुतप्रशसाभेदत्वमेव न्याय्य मन्यामहे । यदुक्तम्–**अधिकारादपेतस्य**त्यादि ।

यत्तु पूर्व पर्यायोक्तभेदत्व **स्निग्धश्यामलकान्ती**त्यादौ रामादीना शब्दानामभिहित तदुपक्रममात्ररूपतया द्रष्टव्य विवक्षितवाच्यस्य पर्यायोक्तभेदत्वात् ।

यत्र खलु वाच्यविवक्षापूर्वकत्वेनार्थान्तर प्रतीयते **चक्राभिघाते**त्यादावुदाहरणचतुष्टये तत्र पर्यायोक्तभेदता पर्यायोक्तलक्षणस्याप्रस्तुत-प्रशसालक्षणविचारवशेन तद्व्यतिरिक्तविषयावगाहित्वात् । यत्र त्वविवक्षिते वाच्येऽर्थान्तरस्य प्रतीतिस्तत्राप्रस्तुतप्रशसा । अतश्च पर्यायोक्ताप्र-स्तुतप्रशसयोरेव यथाक्रम विवक्षिताविवक्षितवाच्ययो सर्वध्वनिभेदसामान्यभूतयोर्ध्वनिभेदयोरन्तर्गतिर्वाच्या ।

**सुवर्णपुष्पा पृथिवीमि**त्यादौ तु विदर्शनाभेदत्व यत्पूर्वमुक्त तदधिकारोपेतप्रस्तुतार्थानुबन्धिवस्तुपानिबन्धात्मत्वेनासभवद्वाच्याया विद-र्शनाया अप्रस्तुतप्रशसाभेदत्वादुपपद्यत एव । एतच्च विद्वद्भिर्विचार्य गृहीतव्य न त्वविमृश्यैवासूयितव्यमित्यलमतिवाचालतया ।

तदेव वाचकशक्तिमूलेऽलकारैकनियते वाच्यशक्तिमूले च रसादिविषये व्यञ्जकत्वे वाच्यस्य विवक्षितत्वैकरूपत्वम् । वस्त्वलकारविषये तु वाच्य शक्तिमूले व्यञ्जकत्वे प्रत्येक वाच्यस्य विवक्षितत्वाविवक्षितत्वाभ्या द्विभे-दता । अतस्तत्समाश्रयणेन त्रिविधप्रतीयमानार्थनिष्ठस्यापि व्यञ्जकत्वस्य षट्प्रकारता भवति । एतेषा च षण्णा भेदाना मध्याद्द्वयोर्भेदयोर्वाच्य-स्याविवक्षोक्ता चतुर्षु विवक्षितत्वम् । यत्र च विवक्षितत्व तत्र वाच्यस्य स्वत सभवित्वात्प्रौढोक्तिमात्रनिष्पादितशरीरत्वाच्च द्वैविध्यम् । अत स्तत्र तस्याष्टौ भेदा भवन्ति । एते चाष्टौ भेदा वाच्यस्य यत्राविवक्षा तद्विषयाभ्या पूर्वोदिताभ्या द्वाभ्या भेदाभ्या सकलिता सन्तो दश सप-द्यन्ते । एत एव त पदवाक्यप्रकाश्यतया द्वैगुण्य भजमाना विशतिर्भवन्ति वर्णसघटनाप्रबन्धाभासस्य व्यञ्जकत्वस्य कृत्तद्धितादिगतस्य च पदवा-क्यानप्रवेशेनैवाविर्भावात् । पदप्रकाश्यत्व यथा **रामोस्मी**ति । **चक्रा-भिघाते**त्यादौ तु वाक्यप्रकाश्यता । तथा च प्राधान्यभूते व्यङ्ग्ये एषा

यञ्जकता विशतिविधा भवति तथा गुणीभूतेपि यथासभव योज्येति । तदाहु –

विवक्ष्यमविवक्ष्य च वस्त्वलकारगोचरे ।
वाच्य ध्वनौ विवक्ष्य तु शब्दशक्तिरसास्पदे ॥
भेदषट्के चतुधा यद्वाच्यमुक्त विवक्षितम् ।
स्वत सभवि वा तत्स्यादथवा प्रौढिनिर्मितम् ॥
दशभेदा ध्वनेरेते विशति पदवाक्यत ।
प्रधानवद्गुणीभूते व्यङ्ग्ये प्रायेण ते तथा ॥ इति ।

वस्त्वलकारगोचरे ध्वनौ प्रत्येक वाच्य विवक्ष्यमविवक्ष्य चेति सबन्ध । विवक्ष्यमिति विवक्षार्हमित्यर्थ । शब्दशक्तिरसास्पदे-इति वाचकशक्तिसमाश्रय रसादिव्यङ्ग्यनिष्ठ च व्यञ्जकत्वमुक्तम् । तद्धि शब्दशक्ति व्यञ्जकभूता रसादीश्च व्यङ्ग्यभूतानास्पदीकरोति । एवमेतद्व्यञ्जकत्व पर्यायोक्तादिष्वन्तर्भावितम् ।

एतच्चेह बहुवक्तव्यत्वान्न वेतत्यन प्रपञ्चित कुशाग्रीयबुद्धीना हि दिङ्मात्र एवोपदर्शिते सति बुद्धिवल्ली प्रतानशतैर्नानादिग्व्यापित्वेन विस्तारमासादयतीति ॥

मीमासासारमेघात्पदजलधिविधोस्तर्कमाणिक्यकोशात्
साहित्यश्रीमुरारेर्बुधकुसुममधो सौरिपादाब्जभृङ्गात् ।
श्रुत्वा सौजन्यसिन्धोर्द्विजवरमुकुलात्कीर्तिवल्ल्यालवालात्
काव्यालङ्कारसारे लघुविवृतिमधात्कौङ्कण श्रीन्दुराज ॥

[ इति ] महाश्रीप्रतीहारेन्दुराजविरचितायामुद्भटालङ्कारसारसङ्ग्रहलघुवृत्तौ षष्ठो वर्ग ॥ ६ ॥

---

# NOTES.

## VARGA I

THE manuscript begins with नमो वीतरागाय which is evidently the मङ्गल of the scribe and indicates that he must have been a follower of Jainism It is therefore not inserted here in the text

The beginning of Udbhata s work as presented here does not contain any मङ्गल Nor does the end also contain any indication that the work is finished This especially the former is a very curious and unusual feature and one may even draw the inference from it that the existing work is a fragment of some greater work which extended before the beginning and after the end of this little treatise But Induraja at least considers this work as a whole and he has never mentioned nor even hinted at any greater work of which this fragment formed a part

The Ms of उद्भटालङ्कारविवृति procured from the Government Oriental Manuscript Library Madras however has the following verse at the beginning of the text —

सर्वत्र विकस्वरता प्रमोददा भवति नायमेवा तम्।
मुकुलोच्चयन तेन क्वचिदपि कर्तव्यतां धत्ते ॥

It is a beautiful ārya and appears to be quite in keeping with the style and sentiment of Udbhaṭa It evidently serves the purpose of a मङ्गल in the form of वस्तुनिर्देश according to the rule of poetics आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम् and gives a fitting reason why a colle tion of alankāras ought to be made even at this stage though they are like buds still in an undeveloped state The verse is an elegant instance of अप्रस्तुतप्रशंसा very appropriately supported by अर्थान्तरन्यास most proper for the occasion

**P 1 L 1**—पुनरुक्तवदाभासं etc । The whole work is divided into six वर्गs or chapters The first chapter begins with the enumeration of four शब्दालङ्कारs beginning with पुनरुक्तवदाभास and four of the अर्थालङ्कारs beginning with रूपक M reads पुनरुक्तवदाभासः

The author of the विवृति whoever he may be gives a curious reason why the alankaras are treated and presented here by Udbhaṭa in so many groups He says it is to show the limited vision (knowledge) of the old Ālankarikas वर्गैर्वर्गैरलङ्कारोपादानं चिरन्तनालङ्कारकृतामल्पदर्शिता प्रकटयितु। Perhaps this remark of the commentator may have some reference to the undeveloped state of the science of alankāras alluded to in the first verse given above from the southern manuscript

**P 1 L 4**—इत्येतएव उदाहृता। These are the only alankāras of speech mentioned by some Here the author appears to refer to some of the ancient alankarikas (like Bharata) who have mentioned some four six or eight alankaras only Udbhata thus eems to be aware of the historical development in alankarasastra Bharata mentions only four alaṇkaras viz —

उपमा दीपकं चैव यमकं रूपकं तथा।
काव्यस्यैते ह्यलङ्काराश्चत्वारः परिकीर्तिताः॥

—भरतनाट्यशास्त्रम्– १६ ४१

It is particularly to be noted here that Udbhata mentions अनुप्रास and treats it very elaborately but altogether ignores यमक while Bharata omits अनुप्रास and includes यमक among his principal alankaras Dandin also lays great stress on अनुप्रास and mentions यमक with a disqualification Cf Daṇḍin s काव्यादर्श १–६१

आवृत्तिमेव सघातगोचरा यमकं विदु।
तत्तु नैकान्तमधुरमत पश्चाद्विधास्यते॥

Mammata too views यमक with a kind of disfavour cf तदेतत्काव्यान्तर्गडुभूतमिति नास्य भेदलक्षण कृतम्। का प्र ९ p 504 Modern alankarikas acknowledge the claims of अनुप्रास and यमक in equal proportion Rudrata in his काव्यालङ्कार gives more prominence to यमक and devotes a full chapter of 60 verses to its treatment (Vide Rudrata s Kavyalankāra Adhyaya 3)

**P 1 L 4**—वाचाम्। The विवृतिकार explains वाचाम् thus –वक्तीति उच्यत इति च वाक् शब्दोऽर्थश्च which means of word of sense and of both तत्राद्य उभयस्य शब्दस्यार्थस्य च। ततस्त्रय शब्दस्य। शेषास्त्वर्थस्यालङ्काराः।

**P 1, L 14**—अत्रानुप्रासे रूपके चतुरितिचोक्तम्। The words त्रिधा attached to अनुप्रास and चतु to रूपक in the very threshold are intended to remove difference of opinion about their subdivisions for Bhamaha has only two kinds of अनुप्रास and two kinds of रूपक Thus Induraja the विवृतिकार says that the mention of the number of subdivisions of अनुप्रास and रूपक is made in order to suggest that these subdivisions should be prominently understood as they are seen in many alankara works He remarks—अनुप्रासस्त्रिधेति रूपकं चतुरिति च पश्चात्कर्तं यद्यपि विभागप्रतिपादनं यद् उद्देश एव कृतं तद् बहुलकार-[ ग्रन्थ- ]दृष्टसप्रभेदालङ्काराष्टरमत्र दर्शितामिति मुख्यत एवास्योपादेयता ख्यननाय । अत एव केश्चिदिति बहुवचनम्। भामहो हि द्विविधं रूपकं चानुप्रासं चावादीत्। पर इत्यादिवक्ष्यमाणबहुवचनस्यायमेवाशयो ज्ञेय ।

**P 2 L 1**—रूपकं चतुरित्यत्र भगतात्यर्थ । The word चतु is formed by [सङ्ख्याया क्रियाभ्यावृत्तिगणने] द्वित्रिचतुर्भ्य सुच्। पा ५।४।१७ and ५।४।१८ and means four times not of four sorts The termination is सुच्(स्) where there is क्रियाभ्यावृत्ति i e repetition of action The nature of रूपक (Metaphor) appears permeating the four divisions of it and thus the existence of रूपक is repeated four times in them So रूपकं चतु means रूपक (Metaphor) severally exists four times (in its four divisions) i e has four sorts In त्रिधा the termination is धा which means प्रकार (पा ५।३।४२) but in चतु the termination is सुच् which means 'times' or repetition Hence arises the apparent difficulty which Induraja has thus explained very ably विवृतिकार says—रूपकजात्युपलक्षितव्याप्तकगत प्रतीयमानं भवति । क्रियाभ्यावृत्तिगणने कृत्वसुजित्यत्र द्वित्रिचतुर्भ्यं सुजिति सुच्। तेन चतुर्भेदं रूपकमिति तात्पर्यार्थ ।

**P 2 L 7**—पुनरुक्ताभास। In the enumeration at the beginning Udbhata names the figure as पुनरुक्तवदाभासम् while in the definition he calls it पुनरुक्ताभासम् for the exigencies of metre it seems The author puts it in neuter gender in both places as he takes it with reference to poetry (काव्य) which it embellishes The real name accepted by all the alankarikas (except Ruyyaka) is पुनरुक्तवदाभास पुनरुक्ताभासम् is the लक्ष्यनिर्देश and अभिन्नवस्त्विव रूपपदम् is the लक्षण or definition, which is a very long and awkward compound Induraja explains it as a बहुव्रीहि of five padas including two बहुव्रीहिs of two padas each When dissolved in the

way of the commentator the whole compound means [ अ का य ] where two padas (words) having different verbal forms appear to be one thing i e having one meaning The word वस्तु in this compound means sense or अर्थ and रूप means the literal form of the word Where the literal form of two words is different but their sense is apparently the same this alankāra occurs The विवृतिकार has a rather lengthy and technical discussion on the definition of पुनरुक्तवदाभास अभिन्न वस्तु वाच्य ययोस्ते अभिन्नवस्तुनी ते इव भासेते भिन्नरूपे पदे यत्रेति केचिद्व्याचचक्षिरे ।

तनुवपुरप्यन्योऽसौ करिकुञ्जररुधिररक्तखरनखर ।
तेजोधाम महत्पृथुमहसामिन्द्रो हरिर्जिष्णु ॥

इत्यादावनामसंग्रहो मा भूदिति समासे संख्या न विवक्षिता इत्यन्य । कालगलादिशब्दस्य पदत्व नास्ति । नलिनतामरसपद्मसांप्रत गगनमणिरम्बरसलक्ररोति यत् ॥ इत्यादि न स्यत इति अभिन्नवस्तिवोद्भासते भिन्नरूप पद पदा तराच्छब्दाद्वा तस्मादकस्मादनकस्मा यत्रेत्यपर । समस्यति येनाभिनाभिधेय तस्य अभिधेयत्वेव बोद्धव्याय । सिद्धे हि तस्याभि धेयवत्त्व तदभिनाभिधेयत्वमस्य शक्यते वक्तुम् । न चात्र कालगलादिशब्दस्य अभिधेय योग । अभ्युपगते वा नात्र शितिकण्ठादिपदमभिनाभिधेयमिव अपितभिनाभिधेयमव । श्रुत च शितिकण्ठ इत्यादिपदे कालगलादिशब्दस्याभिनाभिधेयत्वभ्रमो न त्वश्रुते । तस्मा द्भिनाभिधेयमप्यनभिधेयमपि वा अभिन्नाभिधेयमिव भात्यभिन्नवस्तुन इव पदा न्तराच्छ ब्दाद्वा तस्मादकस्मादनेकस्माद्वा तस्माद्भिनरूप यत्रत्यके विवृण्वते । तदेव सुरताकूतम् इत्यादा यद्यपि नाभाति पुनरुक्ति तथापि चकास यज्ञनारामा इत्यादौ तस्या प्रति भासात् पदमयप्रतीतिकृत् नतु सुप्तिड न्तमेवेतितुल्यकक्ष्यन्श । एव च पदमिति पदानाति वा समसनायम् । Here अभिधेय = वस्तु = object sense The text of the Ms is incorrect and sometimes unintelligible It is hoped it has been made amenable to consistent interpretation by removal of errors

**P 2 L 14**—यद्यपि पुनरुक्तवदा वैचित्र्य दर्शनार्थम् । In the enumeration the figure is पुनरुक्तवदाभास i e containing वत् But here it is without वत् The वत् is therefore to be understood here The author has thus made use of both the terms in order to shew that the figure goes by [two] different names

**P 2 LL 16-20**—क्वचित्खलु तस्यालकार । Sometimes a term is used having some suggested meaning attached to it and at other times it is used only with the expressed meaning In the enumeration the name of the figure gives out the meaning of similarity by the taddhita termination वत् while here in the definition the notion of similarity is

brought out by force of suggestion Thus the line पुनरुक्ता भासमभिन्न etc gives the definition of poetry that contains पुनरुक्ताभास having with it by suggestion the sense of the termination वत्

On this the विवृतिकार has this remark कांचिन्निर्दिश्यमानाथा न्वयिना कांचिदर्थसामर्थ्याक्षिप्ताया वर्यन्याभया भवतीति दर्शनायाद्देशे वात कृत्वानन प्रायुङ्क्त । एतद्दर्शन चान वयोपमादिगम्यमानस्यापह्नुतिरूपकादिवाच्यस्य भेदन भिवत इति दर्शनायम् ।

**P 2 LL 20-26**—अत्रालङ्कार्य निर्देशो युक्त एव । Here the figure consists of the words which appear to be repeated It is said to be an alankara (adornment) as it is the property of poetry which is the thing to be adorned The fruit (effect) of this round about saying is to shew that a group of words containing only an apparent repetition is an alankara The nature of an **alankara** is **well** defined if it is described as a dependent of poetry which it beautifie For when it is viewed with reference to itself as separate it no longer serves the purpose of an alankara in the same way as necklaces armlets bracelets etc when placed in a box So the description in the text of the figure पुनरुक्ताभास as subordinate to poetry in order to shew its real nature is proper

पुनरुक्ताभास is here intended as an attribute of काव्यम् as it is mentioned with neuter gender विवृतिकार has a similar remark here—काव्यस्याऽलङ्कार्यत्वाद्यद्यपि पुनरुक्तवदाभास । पदस्थमलङ्कारस्तथापि मगु लव्य अलङ्कार प्रदर्श । हारादिविलक्षणतया का प्रकार गेह अलङ्कारतेति प्रदर्शनाय का प्रमाश्रित्य पुनरुक्ताभासमिति म नापुंसक संस्कार । The Ms presents a lacuna here

**P 3 L 2**—तदाप्रभृति etc । The subject शितिकण्ठ in the stanza is to be taken with स देव in the next stanza स दवो दिवसानि य etc and is to be connected with the predicate दिनमानि ये M reads तत प्रभृति and interprets as तत काम तारकारक । नागकुञ्जरो हस्तिवर । शीतनलि ।

**P 3 LL 6-7**—कालवशेन निवतमाना पीडा यस्य स । The Nirnaya Sagara edition makes here a needless and quite faulty emendation of the text It has कालवशेन निवर्तमाना (या) सता (तस्या) वियोगेन जनितो य शोकवह्निस्तद्भवा पीडा यस्य । This emendation really

